प्रचरिष्यन्ति, व तन्याः पुनरुत्तरपथे प्रचरिष्यन्तीति" इति समुपलब्धवाक्येन सप्रमाणः समञ्जसश्च भवति। एतत्प्राचीनतमवाक्यजातम् एकतो दक्षिणदेशे वैष्णावानामपि भक्तेरुद्गमार्हत्वमतं सम्पुष्णाति अन्यतः मध्यभारते वैष्णवभक्तेर्व्यापकं महत्त्वमासीदिति पक्षं च समञ्जसं विदधाति।

४. यद्यपि समानकाले देशे च भक्तेरुत्पत्तिः तथापि तयोः काकतालीयत्वं सम्भाव्येत, अतो विहङ्गदृष्ट्या अन्यान्यपि समत्वावाहकबहिरङ्गवृत्तानि विवेचनयोद्भावनीयानि। तथाहि—अत्र द्वयोरवैदिकत्वम् अहिंसकत्वम्, स्त्रीशूद्रादिसर्वजनसंग्राहकत्वम्, एकायनत्वञ्च नैव आकस्मिकम् इति आलोचनीयतां भजति। एतत् सकलमपि श्रौतेभ्यो न रोचते, किन्तु रोचतेतरां च बौद्धबौद्धागमिभ्यः। अवैदिकत्वं पाञ्चरात्राणामनेकेषु पुराणेषु स्मृतिषु च प्रसिद्धम्। किं बहुना, ब्रह्मसूत्रकारैस्तद्भाष्ये च शङ्कराचार्यैः तेषां विप्रतिषिद्धत्वं प्रतिपादितम्। प्राचीनैः पाञ्चरात्रैश्चापि वेदात् पाञ्चरात्रस्योत्कर्षोऽनेकधा प्रतिपादितः। परवर्त्तिभिस्तु यामुनमुनि-रामानुजाचार्य्यप्रभृतिभिः पाञ्चरात्रादिभिः वेदोदितकर्मणामेव विशदीकरणात् स्वतः प्रामाण्यं प्रसाध्य तेषां च बौद्धादिवत् वेदविरोधित्वं नाङ्गीकृतम्। जानन्त्येव च वैष्णवेतिवृत्तविदः पूर्वतनानां पाञ्चरात्राणां वेदाननुकूलत्वं परिवर्तिनाञ्च तदनुकूलत्वमिति। पाञ्चरात्रैश्च सपशुकश्रौतयागमस्वीकृत्य, पाञ्चरात्रसंज्ञका अनेके यागाः स्वविधौ प्रतिष्ठापिताः। न केवलम् एवंविधानाम् अहिंसानिर्गतयागानामुल्लेखः केवलं पाञ्चरात्रसंहितास्वेव, महाभारतेऽपि "बीजैः यज्ञेषु यष्टव्यम्" (म० शा० ना० उ० अ० ३३७) इति दिशा नारायणपराः यज्ञाः श्रूयन्ते। गीतोक्तमिदं सुप्रसिद्धमेव यत् स्त्रीवैश्यशूद्रादिपापयोनीनां सद्गतये, तेषां शुद्धये च भगवतः परा भक्तिरङ्गीकर्त्तव्या। श्रीमद्भागवते (२. ४. १८) तु भक्त्या किरात-हूण-आन्ध्र-पुलिन्द-पुल्कस-खश-यवनादीनां शुद्धिः प्रतिपादिता। एतत् सर्वमभिप्रेत्यैव महाभारते (शा० प० ३३५, ३९) अस्य नारायणपरधर्मस्य व्यपदेशः 'लोकधर्म' नाम्ना कृतः। अत एव पाञ्चरात्रस्यैकायनत्वव्यपदेशोऽपि सङ्गतो भवति, परमेश्वरसंहितायां 'एष एकायनो वेदः' इति, (ईश्वरसंहितायां) च "तस्मादेकायनं नाम प्रवदन्ति मनीषिणः" इत्यादिवाक्यशतैः।

अवैदिकत्वाहिंसकत्वसर्वजनसंग्राहकत्वविषये का विमतिः स्याद्बौद्धनैयायिकेषु बुद्धत आरभ्याद्यावधि एतदाधृत्यैव दर्शन-चर्यादिकं पुरस्कुर्वत्सु बौद्धजनेषु। अतो वेदप्रतिपक्षतया प्राचीनवैष्णवबौद्धयोरेतद्विधसाम्यमपि सहजमेव मन्ये। द्वयोरेकायनवादित्वं तु उभयोर्विशिष्टप्रयोजनवशात् प्रसृतमिति कृत्वा विशेषेणावधेयम्। सुविदितमेव, यत्, वैदिकेषु ब्राह्मणग्रन्थैः श्रौत-गृह्यादिकर्म-धर्मसूत्रैश्च यज्ञादिषु ब्रह्मविद्यायां च शूद्रादीनामधिकारोऽपहस्तितः। स्मृत्यादिभिश्च ब्राह्मणादिद्विजानां विविधसेवाकर्मस्वेव तेषां विनियोगो विहितः। एतद्विरोधे वैखानस-सात्वत-आलवाड़-पाञ्चरात्रादिभिः एकं समानमेव शरणं, आश्रयः अयनं अस्तीति एकायनत्वं सकलजीवानामिति मतं ख्यापितम् उक्तञ्च तत्त्वशेखरे "सत्यवचनादिधर्मवत् सर्वाधिकारं परमात्मप्रपदनम्" इति (ब्र० सू० ३।३।५६) भगवता बुद्धेन च ईशवीयशताब्दीतः पञ्चशतवर्षपूर्वमेव

वैदिकग्रन्थानामप्रामान्यमादिशता बुद्-धर्मसंघेषु सर्वेषामेव सत्त्वानां प्रवेशः, निर्वाणे चाधिकारो यथा उद्घोषितस्तथा व्यवस्थापितः। परवर्तिबौद्धेषु यद्यपि वर्णभेदादधिकारभेदो नासीत् किन्तु सत्त्वानामाशयभेदात् गोत्रभेदः, गोत्रभेदाच्चाधिकारभेदः पूर्वतनकाले आसीदेव। तद् वशात् यो ह्यनेकशो विभागो जातस्तेन श्रावक-प्रत्येकबुद्ध-बोधिसत्त्वानां वर्गाणां प्रादुर्भावोऽजनि। एतत्प्रतिपक्षे पश्चाद्भाविभिस्तु आचार्य, ईशवीतः शतानां द्वित्रिशद्वर्षपूर्व बोधिसत्त्वदिशा' महायाननाम्ना एकायनम्, एकयानम्, ब्रह्मयानमित्यादिव्यपदेशैः सर्वेषामेक एवाश्रयो मार्गो वेति मतं स्थापितम्। उक्तम् अष्टसाहस्रिकायाम् (पृष्ठे–१२) "यथाकाशोऽप्रमेयाणामसंख्येयानां सत्त्वानामवकाशः एवमेव भगवन्नस्मिन् याने", "आकाशसमतया अतिमहत्तया तन्महायानमि"–ति च। एवमेव सद्धर्मपुण्डरीकादिषु "एकं बुद्धयानं त्रियाननिर्देशेन निर्दिशन्तीति" वाक्यजालानि बहुशो विख्यातानि सन्ति।

आलवारेषु शठकोपस्य 'सर्वं जगत् समवलोक्य विभोः शरीरम्" परमेश्वरसंहितायां च "एष एकायनो वेदः प्रख्यातः सात्वतो विधिः" महाभारते च 'एष एकान्तिनां धर्मो नारायणपरात्मकः' इत्यादिवाक्यैः स्व-स्वभावधारासु प्रायः एकायनस्य समानमेव माहात्म्यं स्पष्टीभवति। यद्यपि अर्वाचीनतमैः यामुन-रामानुजाचार्यप्रभृतिभिः तस्मिन्नेवैकायतने वसद्भिरपि पाञ्चरात्राणां वैदिकत्वसाधनव्याजेन ब्रह्मसूत्रे अपशूद्राधिकरणे शूद्रादिवहिष्कारमूलो भेदो व्यवस्थापितः, तथापि प्राचीनतमवैष्णवमतं समनुरुध्य रामानन्दाचार्यप्रभृतिभिः वर्णमूलकोऽधिकारिभेदः खण्डितः बौद्धैस्तु महायानिकैः "गोत्रभेदो न युज्यते" इत्यादिभिः सर्व एव बुद्धबीजाः, बुद्धगोत्राः तथागतगर्भा इति मतं प्रतिपादितम्। पश्चात् काले यथा तथा वा भवतु प्राचीनवैष्णवेषु तत् समकालिकेषु पूर्वतनेषु वा बौद्धेषु तुल्यएव एकायनवादः।

५. इदानीं प्राचीनतमयोः बौद्धवैष्णवयोश्चर्याविधौ साम्यमालम्ब्यविविच्यते। चर्यासु शरणागतिः पूर्वभूमिरिव भवति। सा हि द्वयोः समानैव दृश्यते। इदं तु सम्यगवधारणीय यद् ईश्वरानीश्वरवादिनोः आत्मानात्मवादिनोः पृथक् प्रस्थानभूतयोः शरण्यस्वरूपे स्यादपि विमतिस्तथापि शरणागमनकृत्यं विरुद्धयोऽपि द्वयोः समम्। प्रपत्तिरूपं शरणागतिलक्षणं भरतमुनिप्रणीतं स्तोत्ररत्नभाष्ये **"अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्। तदेकोपायता, याच्ञा प्रपत्तिः, शरणागतिः,** इत्यादिवाक्यैर्लभ्यते। तदनुरोधेन च "अनन्यशरणस्त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये" इति शरणगमन दृश्यते। इत्थं वैष्णवसाधनासु सर्वत्र पदे-पदे शरणागतिराधारभूमिरिव दृश्यते।

भगवतो बुद्धस्य प्रथमायां देशनायामेव बुद्ध-धर्म-सङ्घानां शरणग्रहणं 'त्रिशरण' नाम्ना सिद्धम् अतीव प्रसिद्धम्। बुद्धेन च भगवता स्वमहापरिनिर्वाणकाले आनन्दं प्रति धर्म एव शास्तेति देशनया धर्म एव शरणमिति विनेयेभ्यो भिक्षुभ्यः आदिष्टम्।

'अञ्ञं मे सरणं नत्थि', 'बुद्धं सरणं महत्', 'धम्मं मे शरणं महत्', 'संघं मे सरणं महत्' इत्यादिभिः प्राचीनतमैश्चापि बौद्धैरनन्यशरणता गृह्यते। तेषां साधुतायां षड्विधास्वनुस्मृतिष्वपि 'बुद्धानुस्मृति' नाम्नी एकानुस्मृतिश्चापि प्राचीनतम-

बौद्धेष्वपि दृश्यत एव। इत्थं यदि भक्तिरनन्य-प्रज्ञावादिषु ज्ञानयोगिबौद्धेषु लब्धा, तत्र का कथा महाकरुणावत्सु भक्तिवादिषु महायानिकेषु। ते च न केवलं शरणगता भवन्ति, अपि तु कैंकर्यमपि सम्यग् अधिगृह्णन्ति। उक्तं धर्मसङ्गीतिसूत्रे 'दासोपमेन बोधिसत्त्वेन भवितव्यं सर्वसत्त्वकिंकरणीयप्रापणतया' (शि० स०, पृ० ७०) इति। वैष्णवास्तु मुक्तानामपि परमपुरुषार्थः कैंकर्यमिति तत्त्वशेखरादिषु (पृ० ५५) प्रतिपाद्य 'कैंकर्यमेव मोक्षः' इति समामनन्ति। भक्तिः रागमूला रागप्रवणा च ख्याता। यद्यपि सुविदितमेव बौद्धाबौद्धप्रस्थानेषु रागस्य सर्वथा प्रहाणं नाम, तथापि महायानिकैः बौद्धैः वैष्णवैश्च राग उपायत्वेन स्वीक्रियते। वैष्णवेषु रागानुगा भक्तिः प्रसिद्धा। बौद्धैस्तु निःस्वभावताभूमौ रागोपायेनापि निस्सरणं सत्त्वानामङ्गीक्रियते, इति परमं गोपनीयं साधकैरेव वेद्यम्, तच्चोक्तं महायानसूत्रे (पृष्ठे ८७) "तस्माद् रागादयस्तेषां बुद्धैः निःसरणं गताः" इति। इत्थं साङ्गा शरणागतिः द्वयोरपि प्रस्थानयोः समुपलभ्यमाना दृश्यते।

६. न केवलं शरणगमनविषये, शरण्यसमाराध्यविषयेऽपि अस्ति तयोः साम्यम्। अस्ति बौद्धेषु द्विविध आराध्यः, सत्त्वः बोधिसत्त्वश्च। वैष्णवेष्वपि जीवो, भगवांश्च। वैष्णवेषु ईश्वरः ईश्वरत्वेन भगवत्त्वेन चाराध्यो भवति, अनीश्वरवादे तु केवलं भगवत्त्वेनैव बुद्धानां बोधिसत्त्वानां चाराध्यत्वं सम्पद्यते। बौद्धेषु भगवत्त्वं क्लेशकर्म तथा जन्म, क्लेशज्ञेयावृतिस्तथा च। 'येन वैपाक्षिका भग्नास्तेनेह भगवान् स्मृतः' (आम० स०, पृ० ६) इत्यनुरोधेन जीव एव विपक्षावरणानि परिहाय भगवान् भवति, वैष्णवेषु नित्यभूतोऽनन्तकल्याणगुणगणसम्पन्नः ईश्वरः। किन्तु षण्णां भगवत्त्वं बौद्धवैष्णवयोरुभयोः सम्मतम्। वैष्णवानां त्रयं कर्म भागवतादिषु (११, ३, ४०–४५) लभ्यते—१. जीवेषु दया, २. गोविन्दे पराभक्तिः, ३. तदीयभक्तानां समाराधनम्। अत एव तत्रोत्तमभागवतलक्षणे सर्वभूतेषु भगवद्भावोऽव्यभिचारेण स्वीक्रियते। अस्मिन् विषये किमधिकं वक्तव्यं बौद्धमहायानमतेन यत्र साधकेन तथागतानां आराधनाय जीवलोके सर्वात्मना दास्यभावं निर्वाणं परिहेयं भवति। अत एव महायानिकैः साधारणसत्त्वा अपि बोधिसत्त्वैः समा एवेति स्वीकृतम्, उक्तञ्चाचार्यशान्तिदेवेन (बो अ.६।११३)–

सत्त्वेभ्यश्च जिनेभ्यश्च बुद्धधर्मागमे समे।
जिनेषु गौरवं यद्वत् न सत्त्वेष्विति कः क्रमः॥

बौद्धाचार्यान् अनुकुर्वाणा आलवाराचार्याः शठकोपमुनयोऽपि वदन्ति—

सर्वं जगत् समवलोक्य विभोः शरीरं
तद्वाचिनश्च सकलानपि शब्दराशीन्।
तं भूतभौतिकमुखान् कथयन् पदार्थान्
दास्यं चकार वचसैव मुनिश्चतुर्थे॥ इति।

★

# संस्कृतौच्चारणे दोषा गुणाश्च

—डा० गङ्गाराम पाण्डेयः

भर्तृहरिर्भाषाया वर्ण-विकार जन्यं परिवर्तन-मधिकृत्य स्थिती द्वे प्रत्यपादयत्। एका बाल-स्थितिः, शुद्धभाषणेऽशक्तस्य जनस्य। यत्र बालकस्याव्यक्त-प्रायशब्दादनुमानेन व्यक्तशब्द विनिश्चितयार्थनिर्णयो जायते। इयं च विकसमाना भाषा-दशा; यत्र बालकः अशुद्धादसोधोः साधु शब्दं प्रति, अव्यक्ताद् व्यक्तं प्रति प्रयासी दृश्यते। तथाहि—

'बम् बम् बेति' यदा बालः शिक्ष्यमाणः प्रभाषते।
अव्यक्तं, तद्विदां तेन व्यक्ते भवति निश्चयः॥

—वाक्यपदीयम्

द्वितीया च स्थिति; पामरस्य, अयोग्यस्य, विगुणस्याथ जनस्याशक्तस्य:, यश्चानेकविधान् अपभ्रंशशब्दान् निर्माय दैवीं वाचं विविधं व्यवकिरति। वस्तुतः शब्देष्वपभ्रंशेष्वेव दृढीभूते व्यवहारे तथाविधं बौद्धिकं समुपतिष्ठते पतनम्, यत् केवलं तत्रैव निष्ठावतो जनस्य कृते शुद्धशब्दस्य न किमपि रूपमवशिष्यते। तथा च तत्रैव—

पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः॥
दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः।

—वाक्यपदीयम्

निश्चप्रचं दशेयं नास्ति कथमपि जातीयोत्थानज्ञापिनी; यदुच्चारणे साधौ न स्थितिमाप्नुयाज् जातेस्तस्याः प्रबुद्धो वर्गः। यदा च स्थितिरियं सांस्कृतिकं व्याधि-रूपं समवाप्य जातीय दुराग्रहत्वं भजते, तदा भाषायाः स्थिररूपस्यावहेलनमपि विधीयते, येन च परम्परागतं सांस्कृतिकं जीवनं प्रति निष्ठैवास्माकं ह्रसति क्रमशः। तथ्येऽस्मिन् इमरसननामा मनीषी पाश्चात्यस्तदेव वक्ति, यद् भारतीयां परम्परां प्रति प्रगति-विश्वास-पर आस्थावान् विद्वान् वदेद् भारतीयः। कथयत्यसौ 'भाषायाः पतनमनुसरति मानवपतनम्'[1]।

तथ्यमेतत्प्रकाशयति, यद् वयं क्रिया-कारक-व्यवस्थावति व्याकरणिके प्राचीरे वसन्तोऽपि तिष्ठामः शब्दापभ्रंशीकरणपरायणाः। अत्र प्रत्यक्षं कारण-मेकमेव प्रतिभाति, यद् वर्णानां स्वरूपमजानाना वयं विच्युतोच्चारणाः सन्तः पदच्युतिमङ्गीकुर्वाणा अतिद्रुतं विरचयामो भाषा नवीना देश-कालस्या-तितमां लघुतरासु सीमासु। तत्रैव च दैशिकेषु कालिकेषु चाञ्चलिकताया रूढिजालेषु बध्नीम आत्मानम्। अस्माकं भावात्मिका चैकसूत्रता, यत्रास्मज्जातीयमाभिजात्य स्थिरयति, भजते व्यस्त-ताम्। क्षेत्रीयतायाश्च दुराग्रहघुणो लोपयत्यस्माकं

1. "The Corruption of man is followed by the corruption of language."—Emerson Ouoted on the Perspectives on Language, Page 299.

बौद्धिकं खाद्यसारम्। वयञ्च अविज्ञातभावेनैव समुपलभामहे विश्रृङ्खल-कलह-मृगव्यताम्।

संस्कृतभाषा सा संस्कारभाषा अस्ति, यस्या उच्चारणं परम्परया अनुशासितमासाश्चक्रे। काव्य-मीमांसकैर्मनीषिभिः 'दोषास्तस्यापकर्षकाः' इति प्रतिपाद्य तेषां दोषाणां स्थितिर्वपुषि काणत्वादि-वत्सौन्दर्यापहारिणी निर्धारिता। तथैव 'बुधैर्वैया-करणैः' भाषण-सौष्ठव-घातिनोऽनेके उच्चारणदोषाः परिगणिताः। प्रस्तुतेऽस्मिन् सन्दर्भे प्रथमं प्रातिशाख्य-विवेचितानामुच्चारणविच्युतीनां दिग्दर्शनमात्रं विधीयते। तत्र वर्णोच्चारणघटितानां दोषाणां गणनं सविस्तरमुपन्यस्तम्। अपि च वर्णोच्चारणसम्बन्धि-गुणानामपरिपालनं स्वत एव दोषो महान् इति चोद्घोषितम्। तत्र

**प्रातिशाख्य-निरूपिता उच्चारण-दोषाः**

**१. वर्णापायः**—वर्णस्य अपायः, यत्र शीघ्रता-वशादशक्त्या वा वर्णलोपः संघटते, तत्रायं दोषः। यथा—'रोचते' इत्यस्य 'रोच्ते' सदृशमुच्चारणं स्वरलोपदृशा अशुद्धमेव। तथाकृते 'चकारस्य' तालव्यता क्षीयते, दन्तमूलीयमशास्त्रीयमुच्चारणं च सम्पद्यते। ऋक् प्रातिशाख्यस्यउवटभाष्ये 'ऊनयोः' इत्युदाहृत्य निरूपितम्, यदत्र यकारोऽपकृष्यते चेत्, तर्हि तत्रायं दोषः।

**२ वर्णायः**—अविद्यमानस्य वर्णस्य उच्चारणम् उपजनो वा वर्णायः कथ्यते। यथा 'ह्वयामि' इत्यतः पूर्वमनुनादात्मको ध्वनिर्दोषः। अद्यत्वे 'श र्' संयुक्त-पदात् पूर्वं दोष एष प्रायशोऽवलोक्यते। यथा—

स्त्री=इस्त्री, श्मशानम्=इश्मशानम्।

**३. वर्ण-व्यथनम्**—अयं दोषस्तत्र, यत्र वर्णस्य श्रवणं न जायते यथावत्, प्रत्युत वर्णस्यान्यस्यैव श्रुतिः। यथा 'रथ्या' इत्यत्र थकारस्य सकार-वच्छ्रवणं व्यथनं नाम दोषः। एवमेव :—

गुणः=गुड़ः, रक्षा=रक्छा, इच्छा=इक्षा इत्यादिषु द्रष्टव्यम्।

**४. निरस्तम्** - स्थान - करणापकर्षेणायमुत्पद्यते दोषः। अर्थात् समुचित-स्थान-करणादिभिरनुच्चा-रणन्तु दोष एव, किन्तु उवट-मतेन यदा निरन्तरं स्थान-करण-च्युतो वर्णः समुदीर्यते, तत्रैव च दृढीभूते संस्कार एक आभ्यासिको दोषः समुदीर्यते। तदा च स्थान-करणयोरपकर्ष उपजायते। अवस्थायामे-तस्यामेको जातीयो दुरभ्यास उत्पद्यते, यथा संस्कृतः। ऋकारस्य षकारस्य च उच्चारणे दोषोऽयमुपलभ्यते बाहुल्येन।

हिन्दी-भाषायां फूल=फ़ूल, फिर=फ़िर' इति-वदुच्चार्यते चेत्तदा निरस्त-दोष-प्रवृत्तिः। अत्र न केवलं वर्णोऽपकृष्टः, प्रत्युत उच्चारयितुः स्थान-प्रयत्नौ दूषितौ जातौ।

**५. व्यासदोषः**—व्यासोऽविवेकः। यत्र स्थान-करणयोः अपेक्षातः अधिको विहारो विस्तारो वा विधीयते, तत्रायं व्यासदोषः। स च प्रायशः स्वरेषु दृश्यते। गुजरातीभाषायां हिन्दीभाषायां वा अन्त्य-ह्रस्वस्य 'इकारस्य' दीर्घीकरणप्रवृत्तिर्या, साप्यत्रैव द्रष्टव्या। यथा —

'बुद्धी, मती, मुनी, समाधी' इत्यादयः। एवमेव 'साधू', 'पशू' इत्यादिषु उकारस्य दीर्घीकरणम् व्यासदोषदतमेव।

६. पीडनम्—द्विभावः। यदत्र स्थान-करणयोः संहरणेन संकोचेन वा संजायते। अतिप्रयत्नस्तत्र हेतुः। 'कर्तुम्, कर्तरि' प्रभृतिषु रेफस्य द्वित्वात्मकमुच्चारणं पीडनदोषः। 'पित्तृ, मात्तृ' प्रभृति यदुच्चार्यते सोऽपि दोष एव। पंजाबी उच्चारणे अन्येषामपि वर्णानां द्विरुच्चारिता प्रवृत्तिरवलोक्यते।

७. अम्बूकृतम्—वक्ता यदा वर्णमोष्ठयोरेव परिबध्नाति, येन न सम्भाव्यते पूर्णा श्रुतिः, तत्र दोषो भवति 'अम्बूकृतं' नाम। यथा कदाचित् 'गोविन्द' इत्यस्य 'गोविन' तुल्या श्रुतिः।

८. शूनम्—विलम्बितेन मुखेन यदा वदति वक्ता, तदा भवति 'शूनम्' नामोच्चारण-दोषः। अत्र ह्रस्वोऽपि स्वरः श्रूयते कदाचन दीर्घीकृतः, श्रोतुः श्रवणे प्रतीक्षेते वा चिरं श्रवणम्। 'शूक्ल पूत्र' सदृशोच्चारण एष एव दोषः।

९. सन्दष्टम्—व्रीडने हन्वोः सम्पद्यते सन्दष्टता। व्रीडनञ्च नीचैर्भावो हन्वोः। अत्र त्रुटितो वा अपूर्णरूपो वा भवति वर्णं उच्चरितः। सम्भूतिरस्य दोषस्य बहुधा स्वरेषु अनुनासिकेषु। येषामुच्चारण यथापेक्षं यथास्थितं वा न जायते।

१०. विश्लिष्टम्—हन्वोः प्रकर्षणे घटते दोष एषः। प्रकर्षणं च नाम हन्वोश्चालनं सर्वतः। एवं करणेन उच्चारणमसंहितं गिलगिलत्वयुक्तं वा संजायते।

११. ग्रस्तम्—जिह्वामूलस्य निग्रहेण स्तम्भनेन वा दोषो भवति ग्रस्तम्। अत्र जिह्वामूलेनैव वर्णो निगृह्यते, येन स्पष्टमुच्चरितो न भवति। दोषोऽयं बाहुल्येन घटते कण्ठ्येऽकार आकारे वा। उपरि प्रदत्ते 'रोच्ते' इत्यत्र अकारो ग्रस्ततां गतः। कदाचिच्च संयुक्ताक्षरपूर्ववर्तिनोऽकारस्य ह्रस्वात्मकमुच्चारणं विधीयते चेत्, तर्हि तत्राप्येष एव दोषः।

१२. अनुनासिकम्—वर्णो यत्र नासिकयोरनुषज्यते, तदा समुत्पद्यते अनुनासिकत्वम्। निरनुनासिकवर्णस्य अनुनासिकरूपेणोच्चारणमत्र दृश्यते। यथा—गुणः=गुँणः इति।

१३. स्वरगता मात्रादोषाः—स्वराणामयथावचनं दोषः। ह्रस्वस्य दीर्घीकरणम्, दीर्घस्य वा लघुता, अनावश्यको वा प्लुतोच्चार इमे भवन्ति मात्रादोषाः।

अधुनातनानां भाषाविदां मते "दीर्घ न भवति ह्रस्वस्य द्विगुणः पूर्णतया"। यदीदं मन्येत, तर्हि सोऽपि मात्रादोष एव मन्तव्यः। अनावश्यकैर्बलाघातैरुच्चारयितृषु च स एव दोषः। केचिच्च पाठकाः पद्यपाठान्ते प्लुतयन्त्युच्चारण, सोऽप्यस्यैव वर्गस्य दोषः।

१४. अन्तःस्थलोप-दोषः—यकार-वकार-घटितेषु पदेषु दोषोऽयम् सजायते। यत्रान्तःस्थसंयुक्ताक्षरेषु यकारस्य वकारस्य वाऽवलोक्यते लोपः। यथाः—

निषद्य=निषद्, इन्द्रवाय्वाः=इन्द्रवायोः, प्रत्येक=प्रत्तेक।

१५. अदेशवचनम्—व्यञ्जन-विपर्यये भवति दोषोऽयम्। यथाः— अभुत्स्महि=अभुस्तमहि, विष्णुः=विषुण। अनेनैव मन्ये दोषेण, हिन्दी-भाषायां 'किसुन', 'विसुन' शब्दानामुद्भूतिरभवत्।

१६. व्यञ्जनविरागः—यत्र व्यञ्जनस्यैकस्य प्रभावेण विकृतमुच्चार्यते व्यञ्जनमपरम्, तत्रैष दोषः। यथाः—'मा षड् ढा ढा' इत्यत्र डकारोत्तरढकारस्य तत्प्रभावतो डकारवदुच्चारणम्। 'दण्डः' इत्यतो 'डंडा' भवने दोषोऽयमेव कार्यकारी।

१७. **लेशदोषः**—लेशः प्रयत्नशैथिल्यम्। तेन च लेशेन व्यञ्जनस्योच्चारणं दोषः। यथा:—

रामात्=रामा इति श्रुयेत।

१८. **धारणम्**—वर्णाय-दोष-विपरीतोऽयं दोषः। तत्रोदाहृते 'ह्वयामि' इतिपदे अनुनादपरिहाराय यदि क्रियते हकारलोपः, तर्हि 'वयामि' वदुच्चार्यते। ऊष्मसंयुक्तेषु वर्णेष्वेव लभ्यतेऽयं दोषो बाहुल्येन अधुना बहुशः 'हृदय' पदस्य 'रिदय' सदृशमुच्चारणं धारणाधीनम्।

हिन्दीभाषायां 'स्थान=थान, 'श्मशान=मसान' प्रभृतिशब्दानां जनको दोष एष एव।

१९. **अनादः**—महाप्राणेषु वर्णेषु घटत एष दोषः। यत्र न तस्योच्चारणमुचित विधीयते।

२०. **लोमश्यम्**-उष्मणामघोषाणां वा वर्णानामसुकुमारम् अतिघृष्टं वोच्चारणं लोमश्यं नाम दोषः। मनीषिणः केचन गम्भीरोच्चारणेऽपि मन्वते दोषमेतम्।

२१. **क्ष्वेडनम्**—(क्षिवण्णम्)—सकम्पमुच्चार्यमाणेषुवर्णेषु वर्णतुल्योऽन्यो ध्वनिरव्यु-पद्यते। लोमश्यवदयमपि दोष ऊष्मवर्णानाम्। 'सहृदय' इत्यस्य 'सह हृदय' करणे क्ष्वेडनं सम्पद्यते।

२२. **जिह्वाग्रथनम्**—पवर्गवजवर्गेषु कुचुटुतुषु जिह्वामास्तीर्य कृतमुच्चारणं दोषः। यतो हि वर्णा इमे स्पृष्टाः। अस्मिन् दोष उपभेदद्वयम्—यत्र कवर्गे ग्रास-दोषो भवति, यस्य च ग्रस्तनाम्ना पूर्वमुल्लेखोऽपि विहितः। तवर्गे भवति प्रतिहार-दोषः, यत्र, चापेक्षातोऽधिकं प्रयत्यते।

२३. **निरासः**—जिह्वाग्रथने गणिते वर्गचतुष्टये यदि वर्णा भवन्ति रेफघटिताः, तत्र च रेफलोपे क्रियमाणे घटते निरासः। 'धर्म=धम्म, चक्र=चक्क, पर्ण=पण्ण' प्रभृतीनां निर्मितौ निरासो भवति निमित्तम्।

२४. **विक्लेशः**—दोषोऽय तवर्गीय-व्यञ्जनानाम्। यत्र स्थानकरण-गतायाविशदतायाः अभावो दृश्यते।

२५. **रेफदोषाः**—प्रकारान्तरेण सोकुमार्याभाव एवात्र हेतुः। ऋक् प्रातिशाख्यानुसारेणास्य नामकरणमिदम्। रेफो भवति दुःस्पृष्टः। अतिस्पर्शेनोच्चारणे विहिते सति नूनं दोष एव। असुकुमारोच्चारणञ्चास्ति बर्बरता।

२६. **लकारदोषाः**—लकारोच्चारणमधिकृत्य त्रयो दोषाः परिगणिता ऋक्प्रातिशाख्येः—

(क) जिह्वाग्रकरणो लकारः जिह्वामध्येन तस्या अन्तेन वा कृतं लकारोच्चारणमसत्।

(ख) रेफवदतिस्पर्शजन्यो भवति लकारस्यापि दोषः।

(ग) बर्बरता चात्र तृतीयो दोषः।

२७. **हकारदोषः**—हकारोच्चारणे दोषद्वयं दृष्टम्:

(क) नादध्वनिर्हुंकारः। श्वासवदुच्चारणमेको दोषः। तथाकृते खकार-सदृशो ध्वनिः सम्भवति।

(ख) घोषध्वनिरपि भवति हकारः। तस्य चाघोषवदुच्चारणमपरो दोषः।

२८. **विसर्गदोषाः**—

(क) पूर्वस्वरस्थानो भवति विसर्गः। ततो भिन्नमुच्चारणं दोषः।

(ख) विसर्जनीयोच्चारण-सम्बन्धी दोषो द्वितीयस्तदा जायते, यदा दीर्घाऽऽकारपरवर्तिनस्तस्य जिह्वामूलीयमुच्चारणं विधीयते।

(ग) अनुनासिकदीर्घकारानन्तरमृकारानन्तरं वा यदि विसर्गस्य सम्पद्यतेऽनुनासिकीकरणं, तदा भवति दोषस्तृतीयः। यथा- स्वतवाँः पायुः, नॄः पतिभ्यः

उभयत्राप्यत्र विसर्गस्य निरनुनासिकतैवाभिमता।

(घ) संयोगाद्यूष्मव्यञ्जनानन्तरं कदाचिदनिरिक्तस्य विसर्जनीयस्य संजायत उच्चारणं, तदा भवति चतुर्थो दोषः। यथा—"पावकस्ते स्तोकाः श्चोतन्ति" इत्यत्र 'तेः' सदृशमुच्चारणसङ्गतम्।

(ङ) "शुनश्शेपः, निष्षपी, निष्षाट्, ब्रह्म, विष्णुः, प्रश्निः" इत्येतेषु मध्ये विसर्गतुल्यो ध्वनिर्दोषः।

२९. ऋकार-दोषः—ऋक्प्रातिशाख्यदृशा ऋकारस्य ॠकारस्य वा उकारसदृशमुच्चारणं दोषो दृश्यते। मराठी-भाषायां 'कृष्ण' इत्यस्य 'क्रुष्ण' वदुच्चारणं भवति, स चायमेव दोषः। ऋकारस्थाने इकारोच्चारणमपि दोष एव। यथा—

शृङ्गारः=श्रिङ्गारः, सिंगारः।

३०. लोप-दोष—रेफान्तरं स्वरलोपे कृते घटते दोष एषः। एतच्च तदा जायते, यदा तदनन्तरं भवति कश्चनोष्मवर्णः, अन्तःस्थवर्णो वा। यथा—

पुरुषन्ति=पुर्षन्ति, पुरुवारः=पुर्वारः।

३१. आगम-दोषः—तदा जायतेऽयं, यदा रेफसंयुक्तोष्मणोऽन्तःस्थवर्णमध्ये वा स्वरोऽविद्यमान उच्चार्यते। यथा—

अर्यमा=अरियमा, मर्यादा=मरियादा।

३२. ऐकार-दोषः—अकारपूर्ववर्तिन ऐकास्य यदि भवेदकारसदृशमुच्चारणं, तदेष दोषः। यथा—

वैयाकरणः=वय्याकरणः।

केचिदाहुराचार्याः संवृतदोषमेनम्।

३३. (क) उक्ताद् दोषाद् विपरीतो भवति दोषो यदा यकारस्य द्वित्वात्मकस्य क्रियत ऐकारवदुच्चारणम्। यथा—

शय्या=शैया।

अत एव च दोषात् प्राकृते 'सेज्जा' संजातम्, अद्यत्वे च 'सेज' इति।

(ख) कदाचिच्च असंयुक्तयकारपूर्ववर्तिनमकारं संयोज्य विधीयत एकारो, यथा—

जय=जै।

(ग) यकारयुक्तस्य इकारस्य ऐकारी-करणं चापि जातुचिज्जायते, तदापि दोष एव। यथा—

ऊनयोः=ऊनैः।

(घ) यकार सहितस्य 'ईकारस्य' लोपविधानमपि दोषः। यथा—

ऊनयोः=ऊनः।

(ङ) यकारसंयुक्तस्य बह्वक्षरस्य द्व्यक्षर-सम्पादनं दोषः! यथाध्वनयीत=ध्वन्योत, अध्ययन=अध्यन।

३४. उपरि 'अय' इत्यस्य 'ऐकारी'करणं दोष इत्युक्तम्। तथैव ऐकारस्य यकारसममीकारोच्चारणं भवति दोष एव। यथा-

नेष्ठ=नईष्ठ।

३५. यकार-वकार-पूर्ववर्तिनो महाप्राणस्य व्यञ्जनस्योच्चारणं यदि यकार-वकार-स्थानात् क्रियते, तदापि दोष एव। यथा-

ह्यः; ह्वयः; दध्याः।

३६. दीर्घस्वरपरवर्तिनो रेफसंयुक्तादक्षराद्रेफस्य पूर्वाकर्षणं कृत्वा पृथक्श उच्चारणं दोषः। यथा-

दीर्घायुः=दीर्घायुः, सूर्यः=सूर्यः

३७. उपरि वर्णिते द्वादशे क्रमे यदि वर्णस्यानुनासिकस्य प्रभावादननुनासिको वर्णः सानुनासिक उच्चार्यते, तदापि दोषः। यथा-'नृम्णम्' इत्यत्र ऋकारस्यानुनासिकीकरणम्।

३८ सोष्मीकरणम्-अनुनासिकपरवर्तिनो हकारस्य महाप्राणस्पर्शपरिवर्तनं दोषः। यथा—

सिंहः=सिंघ, संहारः=संघारः।

३९. संयुक्ताक्षर-दोषा—चतुर्विधा एते :—

(क) सयुक्ताक्षरमध्येऽनावश्यकरीत्या अनियमिता वा स्वरभक्तिः दोषः।

(ख) सयुक्ताक्षर-पूर्व-व्यञ्जनस्य द्वित्वं विधाय पूर्वो भागः पूर्वमाकृष्य भवत्युच्चारणीयः। यदि न क्रियते तथा, तर्हि दोषः। यथा—'विप्रः' इत्यस्य विप्+प्रः' इति शास्त्रानुमोदितमुच्चारणमन्यथा दोषः।

(ग) संयोगमध्ये सम्पूर्णः स्वरागमो दोषः। यथा—

'बरनाश्रम निज निज धरम निरत वेदपथ लोग'

अत्र 'वर्णाश्रम' स्थाने 'बरनाश्रम' इति, 'धर्म' इत्यस्य च 'धरम' विधाने मध्ये स्वरागमः। संस्कृते तथोच्चारणं दोषो भवति नापभ्रंशेषु।

(घ) नियमानुसारेण यत्र स्वरभक्तिरपेक्षते, तत्र तस्या अकरणं दोषः।

**महाभाष्य-वर्णिता उच्चारण-दोषाः**

**ग्रस्तं निरस्तमविलम्बितं (?) निर्हत-**
**मम्बूकृतं ध्मातमथो विकम्पितम्।**
**सन्दष्टमेणीकृतमर्द्धकं द्रुतं**
**विकीर्णमेताः स्वरदोषभावनाः॥**

—महाभाष्यम् १।१।१

अत्र परिगणितानां दोषाणामनेकेषां विवेचनमुपरि विहितम्। केचिदत्र प्रकारान्तरेण प्रदत्ताः, अतस्तेष्वेवापेक्ष्यते विचारः।

१. **एणीकृतम्** –सन्ध्यक्षराणाम्—ए, ऐ, ओ, औ—इत्येतेषां भेदाप्रतीतिर्दोषः।

२. **प्रगीतम्** साममङ्गीतवदुच्चारितो वर्णो गानक्रिया-लीनो जायते, स दोषः।

३. **उपगीतम्**—आङ्गलेय्याम् 'ओवर साउन्डिग' वक्तुं पार्यते। यत्र समीपस्थवर्णस्य गीत्या अनुरक्तो वर्णो वर्णान्तरविलीनो भवति।

४. **अविलम्बितम्**--एको वर्णो वर्णान्तरेण असम्पृक्तः पृथग्वा न प्रतीयेत, तदा दोष एषः अतएव' महाकविर्भारविः "विविक्तवर्णाभरणा सुखश्रुति' इति प्रत्यपादयत्। अविविक्ततैव वर्णानां दोषः।

५. **द्रुतम्**--अतिशयतया शीघ्रतया वर्णानामेकीभावो द्रुतं नाम दोषः।

६. **विकीर्णम्** –वर्णस्यैकस्योच्चारणं वर्णान्तरं यावत् तथा प्रसरेत्, यदयमनेकवत् प्रतीयेत, तर्हि विकीर्णता-प्रादुर्भावः, स एव दोषः।

**शिक्षा-मान्या उच्चारण-दोषाः**

पाणिनीय-शिक्षायामुच्चारणदोषाणां परिगणनमित्थमुपन्यस्तम्:—

**गीती शीघ्री शिरःकम्पी यथालिखितपाठकः।**
**अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः॥**

पाणि० शि० ३२

एतेषु 'गीती, शाघ्री, अल्पकण्ठ' इत्येतेषां दोषाणां प्रतिपादनं प्रकारान्तरेण जातमेवोपरि। अवशिष्टा एवात्रावलोक्यन्ते।

१. **शिरःकम्पनम्**—एषा चेष्टा दोषदृशा दृष्टा, यत आलोक्य शिर :—कम्पं श्रोतुर्ध्यानं विचाल्यते श्रवणात्; येन वर्ण-श्रवणे स्पष्टता ह्रसति। अत्र च न प्रत्याख्यायते तावन्मात्रं शिरःकम्पन, यदभिनयात्मकं भावाभिव्यक्तौ सहायकं च; प्रत्युत निरर्थकं शिरश्चालनं भवति वर्ज्यम्।

२. **लिखितपाठकः**—शुद्धमशुद्धं वा यथालिखितं पठ्यते चेदसौ दोषः। अत एव नारदीय-शिक्षायाम्—

**पुस्तकप्रत्ययाधीतं नाधीतं गुरु-सन्निधौ।**
**न शोभन्ते सभामध्ये जारगर्भा इव स्त्रियः॥**

नार० शि० ८

इति संस्थाप्य पुस्तक-प्रत्ययाध्ययन प्रत्याख्यातम्। अद्यत्वे मुद्रणदत्ता अशुद्धयो यथायथं पठ्यन्ते चेत् सोऽपि दोष एव।

३. **अनर्थज्ञता**—अज्ञानादर्थस्य पदैकघटितो वर्णः पदान्तरघटितः सन्नुच्चार्यते। गुरुजना उदाहरन्त्यत्र-'दश राम-शराः'=दशरा-मशराः' इति।

अनेन कदाचिदनर्थोऽपि सम्भाव्यते यथा भाषायाम्—

'गदाधरजू तन ताप बुझाइ हैं'
'गदाधर जूतन ताप बुझाई हैं'

पाणिनीय-शिक्षायामपरेऽपि दोषाः, परिगणिताः, येषां विवेचनं प्रातिशाख्यीयेषु महाभाष्यवर्णितेषु वा दोषनिवहेषु समजायत। ये च केचन नवीना इव प्रतीयन्ते, ते नामान्तरगृहीता वा नाम्नैव लक्ष्यन्ते वा। यथाहि ते—

**शङ्कितं भीतमुद्घुष्टमव्यक्तमननुनासिकम्।**
**काक-स्वरं शिरसिगं तथा स्थान-विवर्जितम्॥**

**उपांशुदष्टं त्वरितं निरस्तं**
**विलम्बितं गद्गदितं प्रगीतम्**
**निष्पीडित ग्रस्तपदाक्षरं च**
**वदेन्न दीनं न तु सानुनास्यम्॥**

पाणि० शिक्षा० ३४, ३५.

अनन्ता वस्तुतो दोषसंख्या, तेषामियत्ता दुर्निर्धारा। नानास्वभावा मानवाः, स्थान-करणानुप्रदानविविधतावतां वर्णानामुच्चारणे कं दोषं कदा विधास्यन्ति इति कथनं दुःशकम्। शास्त्रात् संकेतो लभ्यते, येन च समेषामेषां दोषाणां सम्भाव्यते निराकृतिः। यद्यप्यत्र बहूक्तं, तथापि पुनरुक्तता, अस्पष्टता, कष्टत्वम्, अशक्यार्थत्वादयो बहवो दोषा अपरिगणिता एव, विद्वद्भिः स्वयमूह्याः।

## उच्चारण-गुणाः

दोषाणां निराकरणेन सम्पद्यन्त उच्चारण-गुणाः। रामायणे हनूमतो वाणीमाकर्ण्य कल्याणीं भगवान् रामभद्रो यथान्वभवत्, तेन विज्ञायते, यत् तदानीं ध्वनि-विज्ञानस्योच्चारण-विज्ञानस्य च (फोनेटिक्स् एण्ड फोनेमिक्स्) प्रशिक्षणमभिजातस्य च कृतेऽभूदनिवार्यम्। मुख-नेत्र-ललाट-भ्रू प्रभृतीनामङ्गानामुच्चारणकालिकी प्रक्रिया निर्दोषा भूयादित्येतस्य सम्पूर्णा व्यवस्थाऽस्माकं जातीयजीवनस्याश्चर्य-समन्वितं गौरवमुद्घाटयति। असन्दिहानमुच्चारणम्, अदूरव्यापि, अविलम्बितत्वं—येन श्रवणौ न स्यातां प्रतीक्षमाणौ चिरं, व्यथाहीनं—येन वर्णस्पष्टता तिष्ठेत् सुरक्षिता, इत्येते सन्ति तथाविधा गुणा, यत्र बोभूयाच्चक्रे बलं तदानीम्। अतितारा-

तिमन्द्रापेक्षया मध्यसप्तकमाश्रित्य उरःस्थमध्यमानादस्य कण्ठगताया वैखरीवाचश्च साधु समन्वयः, वक्तुरभवद् विभूषणम्। उच्चारण-संस्काराणामेषां वक्तरि क्रमोऽयं न केवलं रचयति वाणीं सुसम्पन्नां, प्रत्युत विस्मयविमुग्धं विधत्ते श्रोतारमपि। श्रवण-मधुरा तादृशी वाणी खल्वबोभूयिष्ट कल्याणी, या श्रोतुर्हृदयं पुलकैः पूरयति। उरसः कण्ठात् मूर्ध्नश्च व्यक्ता वर्णा विचित्रतां वहन्तः सन्तः शत्रोरपि चित्तं वशीकर्तुं प्रभवन्ति। तथा चादिकविः--

**न मुखे नेत्रयोर्वापि ललाटे च भ्रुवोस्तथा।**
**अन्येष्वपि च गात्रेषु दोषः संविदितः क्वचित्॥**
**अविस्तरमसन्दिग्धमविलम्बितमद्रुतम्।**
**उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे॥**
**संस्कार-क्रम-सम्पन्नामद्रुतामविलम्बिताम्।**
**उच्चारयति कल्याणीं वाचं हृदयहारिणीम्॥**
**अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया।**
**कस्य नाराध्यते चित्तमुद्यतासेररेरपि॥**

--किष्कन्धा, तृतीयः सर्गः।

अर्थ-गौरव-रहस्य-स्थापना-लब्ध-प्रतिष्ठो महाकविः भारविर्वाणीमेनां मनुते तुलनीयाँ तया सह सुन्दर्याङ्गनया, यस्याः प्रतीयन्त आभरणानि सुव्यक्तानि, ध्वनिः श्रवणसुखदः, या चा मोहयति मनः शत्रोरपि, या प्रसादपूर्णा सती, सम्पन्ना चार्थगाम्भीर्येण। नूनमसौ वाक् सुकृतिनां धन्यानाम्।

तथाहि--

**विविक्त-वर्णाभरणा सुख-श्रुतिः,**
**प्रसादयन्ती हृदयान्यपि द्विषाम्।**
**प्रवर्तते नाकृत-पुण्य-कर्मणां,**
**प्रसन्न-गम्भीर-पदा सरस्वती॥**

—किरातार्जुनीयम्, १४।३

ब्रह्मर्षिर्याज्ञवल्क्योऽपि सुस्पष्टता-सम्पादनायोच्चारणस्य माधुर्यं समर्थयन्नाह

**मधुरं च न चाव्यक्तं व्यलं चापि न पीडितम्।**
**सनाथस्येव देशस्य न वर्णाः सङ्करं गताः॥**

—याज्ञ० शिक्षा, १९६

अत्र वर्णशब्दगतया श्लेषात्मकतया शिक्षाया उपयोगिता समाजिकोति साधयता महर्षिणा गुणातिशयतां सम्पाद्य खलु बहूपकृतमिति मन्तव्यम्।

अन्ततः पाणिनीय-शिक्षायामुच्चारयितुरुत्तमस्य षण्णां गुणानां वर्णनमुपलभ्यते। तद्धि

**माधुर्यमक्षर-व्यक्तिः पदच्छेदस्तु सुस्वरः।**
**धैर्यं लय-समर्थं च षडेते पाठके गुणाः॥**

--पाणि० शिक्षा, ३३

गुण-दोषौ परस्परापेक्षिणौ। दोष-निरासेन सम्पद्यन्ते स्वत उच्चारण-गुणाः। गुणानुसरणेन च निरासेन निसर्गतो निरसनं दोषाणाम्। स्पष्टं प्रभावपूर्णं चोच्चारणमुपमया प्रतिपादयन् महर्षिः पाणिनिः शिक्षायामुक्तवान्

**व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीडयेत्।**
**भीता पतन-भेदाभ्यां तद्वद् वर्णान् प्रयोजयेत्॥**

--पाणि० शिक्षा, २५

मार्जारी मुखेन वहति पुत्रान्। यत्र न तथा शिथिलो ग्रहो यद्वत्सा पतेयुः, न च तथा क्लिष्टो यत् क्षता विक्षताश्च जायेरन्, तथैव व्यक्तानव्यथितानुच्चारयेद् वर्णानिति सारः।

मोक्षः परमः पुरुषार्थः संस्कृत्यां भारतीयायामिति मन्यमानैः महर्षिभिः जीवनस्य गतिविधयः सर्वे सह तेनैव संयोजिताः। तस्मादेव च व्याकरण-प्रयोजनं प्रतिपादयन् वाक्यपदीयकारोऽपि।

**इदमाद्यं पदस्थानं सिद्धि-सोपान-पर्वणाम्।**
**इयं सा मोक्षमाणानामजिह्मा राज-पद्धतिः॥ इति॥**

सम्यक् च वर्णप्रयोगेण परमदुर्लभोऽपि मोक्षः स्वत एव आनुषङ्गिकः सम्पद्यते। अत एव वर्णोच्चारण-विधिं सविस्तरं निरूप्य भगवान् पाणिनिरुपसंहृतवान्

**एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः।**
**सम्यग्-वर्ण-प्रयोगेण ब्रह्मलोके महीयते॥ इति॥**

★ —पाणि० शि०, ३१

* श्रीजगन्नाथाय नमः *

# शकुन्तलापुत्रः कानीन उत औरसः

—श्रीव्रजकिशोर स्वाइ,
श्रीसदाशिवकेन्द्रीय संस्कृत विद्यापीठम्-पुरी

सारार्थभावपरिनिष्ठितनाटकस्य
शाकुन्तलस्यकविगौरवसाधितस्य
श्रीकालिदासरचितस्य सतां प्रमोदे
स्मृत्या नुसारमिहकर्मणि संप्रवर्त्ते ।

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तलेति काव्यरसपिपासूनां विदुषां विद्वत्यनुसारं कविकुलगुरुकालिदासप्रणीतमभिज्ञानशाकुन्तलमिति नाटकं विदग्धहृत्पल्वलारविन्दप्रकाशनतत्परं शास्त्रीयवाक्यवैचित्र्यगभस्तिभिः समलंकृतं भास्कररूपम् । सर्वशास्त्रसमर्थनात्मकसज्जनप्रशंसादुर्जननिन्दावैशिष्ट्यात् काव्यस्य सत्सु प्रातिद्विकशास्त्रवैभिन्न्येषु तत्सर्जनैकहार्दसमुच्चयाः धर्मकर्मविचारनिश्चयायैव व्यवहरन्ति भारतीयार्यसंस्कृतिप्रतिनिधिपदभाक् वेदानुगामि धर्मशास्त्रम् । सम्प्रति तु प्राकरणिकाभिज्ञानशाकुन्तलनाटकग्रन्थमंथनेन स्वतो जागर्त्ति सन्देहपुञ्जः यत् सुरासुरद्वन्द्वपुरन्दरवन्दितसार्वभौमचक्रवर्तिदुष्यन्तान्तः सत्त्वकण्वकुमारीशकुन्तलातनयस्य भरतस्य कानीनत्वमुत औरसत्वम् ?

कण्वानुपस्थितिकाश्रमाटव्यां दुष्यन्तसंपर्कानुसारिण्याः कुमारीशकुन्तलायाः भरतकारणीभूतात्वान्मानवीयवचसा कानीनत्वमेव मुक्त्या संगच्छते भरतस्य । यतो हि

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः
तं कानीनं वदेन्नाम्ना वोढुः कन्या समुद्भवम् ।
मनु ९।१७२

ननु औरसक्षेत्रजदत्त्रिमकृत्रिमापविद्धगूढोत्पन्नकानीनपौनर्भवस्वयंदत्तक्रीतकसहोढजपारशवेषु जनकस्य दायहरो भवति कानीनपुत्रः शकुन्तलाप्रसूतस्य भरतस्य कानीनत्वप्रतीतिगौरवात्, ( कन्याया अपत्यं पुमान् इति व्युत्पत्त्या ), येन हि तेनैव परिपालितायाः नाम भारतमिति शास्त्रान्तरेषूक्तत्वात् । यथा—

भरताद् भारती कीर्त्तिर्येनेदं भारतं कुलं,
अपरे ते च पूर्वे वै भरता इति विश्रुताः ।
भरतस्यान्ववाये हि देवकल्पा महौजसः ।
( महाभारतम् आदि / संभव / ७४ / १२५-१२६ ) ।

दुर्वासःकोपोज्झितशकुन्तलां तत्प्रसूततनयं भरतं मारीचाश्रमात् यत्राजिग्राह दुष्यन्तस्तत्राप्यृषिणाऽभाणि—

एषते गृहचतां पुत्रश्चक्रवर्त्ती भविष्यति,
आहर्त्ता सर्वयज्ञानां महाभागवतो नृपः ।
( पद्मपुराणम् ५/७४ )

अत्र चासत्यपि दायहरत्वे भाविचक्रवर्त्तित्वासम्भवात् कानीनत्वेऽपि भरतस्य दायहरत्वमुक्तम् । पुनः प्राकरणिकनाटकस्य चतुर्थाङ्के पतिगृहयात्रिण्यै शकुन्तलायै आशीः प्रदानव्याजेन कण्वस्य कविकुलगुरुणा कालिदासेनापि दायहरत्व भरतस्य—

"भूत्वा चिराय सदिगन्तमहीशपत्नी,
दौष्यन्त्यमप्रतिरथं तनयं प्रसूय,
तत् सन्निवेशितधुरेण सहैव भर्त्रा,
सान्त्यै करिष्यसि पदं पुनराश्रमेऽस्मिन्।

( अभिज्ञान शाकुन्तलं ४/५३ ) इति कथं कथयितुं युक्तम् ?

अत्रोच्यते नहि अत्र कानीनत्वेन दायहरत्वं भरतस्य, अपितु औरसत्वेनैव। कुत इति चेदौरसत्व प्रसक्त्यभावे समुदायं दायं कानीनत्वेन प्राप्तुं नार्हति भरतः। यतो हि

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्॥
-मनुः ९।१६३

पुनश्च भरतस्य कानीनत्वे शकुन्तलाया धर्मपत्नीत्वमपि नैव युज्यते दुष्यन्तस्य यतः धर्मपत्नी हि प्रातिस्विकं सस्कृतं क्षेत्रं स्वामिनः। तस्मिन्नुत्पन्नः पुत्रः द्वादशपुत्रेषु दायनिमित्तं सर्वकमर्थिं च प्रथमंकल्पितम्। मनुनोक्तम्—

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धियम्।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम्। (९-१७२

एवं तर्हि कुमार्यवस्थायां पितृगृहालयायां शकुन्तलायां भरतजनन्यां सत्यां कथं धर्मपत्नीत्वेन स्वीकृता दुष्यन्तेनेति चेत् गान्धर्वरीत्यावैवाहिकान्वयसामर्थ्यात्।

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥
( मनुः ३।२१ )

इत्यष्टविधविवाहेषु गान्धर्वस्य पाठात् "क्षत्रस्य चतुरो वरान्" ( मनुः ३।२३ ) इति स्मरणेन "आसुरगान्धर्वपैशाचराक्षसा इति विवाहचतुष्टयाधिकारित्वात् क्षत्रियस्य, शकुन्तलया साकं गान्धर्वरीत्या विवाहः समीचीनतरः दुष्यन्तस्येति। विवाहेऽस्मिन् कामप्रकृत्युत्पन्नहार्दसम्पर्कानन्तरं वैवाहिककर्मानुष्ठीयते। यथोक्तमापस्तम्बेन—"मिथः कामात् संवर्तते स गान्धर्वः" ( १।२।३ )। मनुनापि स्पष्टीक्रियते—तत्

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः॥
( मनुः ३।३२ )

एतेन हि वोढुः दुष्यन्तस्य धर्मपत्नी भवितुमर्हति शकुन्तला। अतः धर्मपत्नीत्वात् शकुन्तलायाः तस्यामुत्पन्नः पुत्रो भरत औरस एवं, न हि जातुचिदपि कानीनः। अत्र पुनः कथ्यते नारदेन कानीनस्यापि दायहरत्वमस्तीति।

कानीनश्च सहोढश्च गूढायां यश्च जायते।
तेषां वोढा पिता ज्ञेयस्ते च भागहराः स्मृता.।
( १३-१७ )

किन्तु नहीदं वचः मुख्यत्वेन दायग्रहणपरकम्। यतः उक्तं याज्ञवल्क्येन—

'पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः' (व्य-१३२)

सत्यौरसे पुत्रे कानोनस्य दायहरत्वेन स्वत्वं नास्ति विष्णुवचनात्—

'अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः।
पौनर्भवश्च नैव ते पिण्डरिक्थांशभागिनः"।

अपितु ग्रासाछादनमात्रं—

"उत्पन्ने औरसे पुत्रे चतुर्थांशहराः सुताः।
सवर्णा असवर्णास्तु ग्रासाछादनभाजनाः॥"
( कात्यायनः )

(अत्रासवर्णपदेन कानोनादीनां ग्रहणात्)। पुनः यस्य कानीनस्य अज्ञातपैतृकत्वमनूढमातृकत्वं तस्यास्ति मातामहरिक्थहरत्वं पिण्डदातृत्वञ्च नारदवचनात्।

"अज्ञातपितृको यस्य कानीनोऽनूढमातृकः।
मातामहाय दद्यात् स पिण्डं रिक्थं हरेत सः।"

अतो भरतस्यैतद्राहित्यात् औरसत्वमेव वाढम्। ★

# धर्मो धारयते प्रजाः

धर्मः प्रजाः धारयते । प्रजाना धारणे धर्म एव प्रभवति इत्यस्य निष्कर्षः । धारणाद्धर्म इति पुराणा प्रसिद्धि । धर्मः कथं प्रजाः धारयते इति विचारणीयो विषयः । प्रजाना धारणस्य च किन्नाम तात्पर्यम् । धारणतु तस्य भवति यः स्वयं स्वकं धर्त्तु निश्चप्रच नैव प्रभवति । माता शिशुं धारयति, अङ्के निधाय सर्व साध्य सम्पादयति । सबलः दुर्बल धारयति । धारणे बलवत्ता ध्रुवम् अपेक्ष्यते । श्रुतिः कथयति- नायमात्मा बलहीनेन लभ्यः' । बलहीनः आत्मानम् न प्राप्तुं शक्नोति । प्रत्यभिज्ञादर्शने सूत्रम् 'बललाभे सर्व स्वात्मसात्करोति' प्रत्यभिज्ञापयति–यत् बलस्य प्राप्तिः प्रथमकर्त्तव्यतयाऽनिवार्या—यथा समग्रं जगत् स्वात्मसात् कर्त्तुं शक्यते ।

मन्ये-धर्मः यदा प्रजाः धारयितुं प्रभुः तदा अवश्यं धर्मः बलवान् भवति । किन्तु धर्मे कास्ति बलवत्ता ? न प्रत्यक्षं दृश्यते । धर्मः नास्ति कश्चित् स्थूलः पदार्थः, न वपुष्मान् शरीरधारी मानवः कश्चित् प्राणी वा । तथापि तस्मिन् बलं कल्प्यते । तेन बलेनैव सः प्रजाः धारयते । तर्हि किं नाम धर्मस्य बलमिति विचार्यते ।

भारतीया संस्कृतिः वर्णाश्रमव्यवस्थया समुपबृंहिता विश्वं वैश्वात्म्यं सन्दिशति । मानवधर्मशास्त्रे समादेशः विधीयमानतयैव समुद्दिष्टो वर्तते—

**चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।**
**दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ।। म. ६।९०**

अर्थात् ये ब्रह्मचर्यादिष्वाश्रमेषु श्रद्धालवः द्विजाः सन्ति तैः सर्वैः दशलक्षणकः धर्मः प्रयत्नतः अनुष्ठेय एव । तत्र दशलक्षणकः धर्मस्तु—

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।**
**धीर्विद्या सत्यमक्रोधः दशकं धर्मलक्षणम् ।। ६।९२**

इति श्लोके सम्यक् परिभाषित वर्त्तते । मानवजीवने एष दशलक्षणधर्मः यदि सम्यग्व्यवहार्यः स्यात् तदा मानवत्वे दिव्यतायाः प्रतिष्ठा स्वत एव स्थायिनी स्यात् ।

कर्ममीमांसादर्शनस्य धर्मपादे सूत्रकारेण भगवता सूत्रितमेवम् –'धारको धर्मः' अर्थात् समष्टिव्यष्टिब्रह्माण्ड-पिण्डमयसम्पूर्णां सृष्टिक्रियां यः धरति धारयते वा सः धर्मः अस्ति । श्रुतौ —'धर्मो विश्वस्य जगतः प्रतिष्ठा' लोके धर्मिष्ठं प्रजाः उपसर्पन्ति' धर्मेण पापमपनुदति 'धर्मे सर्वं प्रतिष्ठितं—तस्मात् धर्मं परमं वदन्ति' इत्यादिसूक्तिषु धर्मस्य महत्त्वं प्रतिपादितं वर्त्तते । महाभारते च—'धारणाद्धर्म इत्याहुः धर्मो धारयते प्रजाः । यस्स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ॥' इति श्लोके धर्मस्य प्रजाधारकत्वं समर्थितं वर्त्तते ।

अस्मिन् परिप्रेक्ष्ये धर्मस्य प्रजाधारकत्वविषयः तथैव जागर्ति-कथं धर्मः जगतः प्रतिष्ठा ? किन्नाम तात्पर्यम् प्रजानां धारकत्वस्य धर्मस्य ?

वस्तुतः धर्मस्य जगद्धारकत्वकथने निश्चप्रचमन्यैव काचिदास्ते गूढार्थसमुद्घाटनपटीयसी शास्त्रदृष्टिः । अस्यां दृष्टौ मानवव्यवहारसंसाधको दशलक्षणो धर्मः ध्रुवमेव नायाति । धर्मः अस्ति कश्चित् विशिष्टं तत्त्वम्, येनानन्तपिण्डब्रह्माण्डात्मकसृष्टिस्थितिसंहारप्रक्रिया प्रकृष्टतया प्रचलति, येनोद्भिज्जस्वेदजाण्डजजरायुजयोनीनामगणितानि स्वरूपाणि परिस्फुरन्ति येन च प्रत्येकब्रह्माण्डान्तर्गताः अनेके ग्रहोप-

ग्रहसनक्षत्रतारकादयः स्वस्वकारणशरीरेभ्यः समुत्पद्य स्वस्वस्थानमऽधिवसन्तः पिण्डमयानन्तजीवशरीरं समाश्रयन्तः महाकाशे यथावत्स्थितिं लभन्ते।

अस्मिन् दृष्टिबिन्दौ धर्मस्य महत्त्वं सर्वोत्कर्षेण सर्वातिशायितया चोपबृंहितं भवति। अस्यां दृष्टौ धर्मः परब्रह्मणः इच्छाशक्तिरेव कल्प्यते। उक्तं च एकत्र—

**या बिभर्त्ति जगत्सर्वमीश्वरेच्छा ह्यलौकिकी।**
**सैव धर्मो हि सुभगे! नेह कश्चन संशयः॥**

इत्येवं धर्मस्य वैज्ञानिकम् तत्त्वम्। यदा ईश्वरेच्छैव धर्मः तदा तस्य प्रजानां धारकत्वे का संशोतिः? अतएव सम्प्रति जगति प्रचलिताः विभिन्नरिलीजनमजहबसमाजसंघादयः नैव धर्मश्रेण्यामागमिष्यन्ति केवलं निगमागममननमन्थनमकरन्दमधुमहोदधिमहोत्पलायमानस्य सनातनस्यैव धर्मस्य धर्मत्वम् सिद्धयति यः सर्वत्रैव सर्वशक्तिमतः परमेश्वरस्य ऐश्वर्यमेव पश्यति अतएव कथयति च—

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्**
**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥**

श्रुतिः स्पष्टमेवोद्घोषयति :—

**सत्यं बृहदृतमुग्रं दीक्षा तपो**
**ब्रह्म यज्ञः, पृथिवीं धारयन्ति।**
**स एष—पृथिवीधारकः,**
**धर्म एव सर्वं धर्तुं प्रभवति।**

तस्यैव रूपाणि सत्ये ऋते दीक्षायां तपसि ब्रह्मणि यज्ञे च स्फुरितानि सर्वत्र सर्गे विलसन्ति।

पुरुषसूक्ते धारणापरम्परैव निर्दिष्टा वर्त्तते—

**ततो विराडजायत विराजोऽधिपूरुषः।**
**स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥**

सहस्रशीर्षामन्त्रे—स भूमिं सर्वतः स्पृष्ट्वात्यत्तिष्ठत् दशाङ्गुलमित्युक्त्या तस्यैव परमेश्वरस्य सर्वाधारकत्वं सुष्ठु प्रतिपादितं वर्त्तते। एतस्मिन् सन्दर्भे साक्षात् पारमेश्वरी व्यवस्थैव धर्म इति स्पष्टतयावधेयम्।

एनमेव धर्मं मनीषिणः मंत्रद्रष्टारः ऋषयः—धर्मो विश्वस्य जगतः प्रतिष्ठा इत्यादि रूपेण समर्थितवन्तः। पश्चात् ते व्यचारयन्—यत् धर्मेणैव ईश्वरीयेण बलेन जीवाः मानवयोनिमासाद्यासाद्य च ऐहिकामुष्मिकाभ्युदयार्थं प्रयतन्ते। एतमेव अर्थं लक्ष्यीकृत्य कथितं भगवता सूत्रकारेण—'यतोभ्युदयनिःश्रेयससिद्धिः स धर्मः।' इयं द्वितीय—स्तरीया धर्मपरिभाषा। अनया मानवजीवनमधिकृत्यैव धर्मस्य तत्त्वं परिशेष्यात् प्रतिस्फोटितम्।

तृतीयस्तरीया च वर्णाश्रमव्यवस्था धर्मस्य रूपं विवृणोति। एतस्मिन् स्तरे एव—दशलक्षणको धर्मः धर्मत्वेन स्वीकृतः वर्त्तते। अनेन धर्माचरणेन प्रजानां जीवने नैयत्यं प्रतिष्ठाप्यते। इयमेव धर्मस्यबलवत्ता यया सः सर्वं धरति! इति सकलमर्थं मनसि निधाय प्रयोक्त्रा प्रयोजितम्—

धर्मो धारयते प्रजा इति शम्

—स्वात्मचैतन्यानन्दस्य

पूर्वतोनुवृतम्

# क्रियापादः

सूक्ष्मप्रपञ्चे तत्सम्बन्धं निदर्शयति —

### सूक्ष्मसम्बद्धौ रागद्वेषौ ॥१०३॥

स्थूले प्रपञ्चे आकर्षणविकर्षणवत् सूक्ष्मे किल रागद्वेषौ वेदितव्यौ ॥ वृत्तिराज्ये रागजनिताः सर्वा अपि वृत्तयो रजस्संभूताः, द्वेषोत्पन्नाश्च तमःप्रसूताः । बहिर्जगत्याकर्षणविकर्षणवत् अन्तर्जगति रागद्वेषसमुद्भवा वृत्तयो विज्ञातव्याः । रागदशायामेकस्याकर्षणं द्वेषावस्थायां चापरस्य विकर्षणमुत्पद्यमानं संसारेऽपि प्रत्यक्षं विलोक्यते । सुहृत्सु परस्परमनुरागे समुत्पद्यमाने वार्त्तालापादिक्रियाकलापा अन्योन्यमाकर्षकत्वादुपादेयतां भजन्ते सपत्नेषु द्वेषसद्भावात् त एव पारस्परिकं चित्तं व्यथयन्तो हेयतां प्रतिपद्यन्ते ॥१०३॥

तत्प्रधानफलमाचष्टे —

### सर्गविसर्गनिमित्तम् ॥१०४॥

अन्तर्जगति बहिर्जगति वा द्वयोरेकं सर्गहेतुकं द्वितीयं च लयमूलकमवधेयम् । बहिर्जगत्यन्तर्जगति चाकर्षणं सृष्टेः, विकर्षणं च लयस्य कारणतां भजेते । सर्गविसर्गयोर्मूले सर्वेष्वपि स्थानेषु सर्वास्वप्यवस्थासु च विद्यमानं मौलिकं तत्त्वमेतदेव । स्थूलजगति परमाणूनामन्योन्यमाकर्षणेनैव सर्वेषां ग्रहोपग्रहादीनामपि सृष्टिः तेषां विकर्षणप्रक्रियया च प्रलयः संजायते । सर्गे किल परमाणुभिराकृष्यमाणैः पञ्चतत्त्वात्मकं स्थूलं जगदुद्बुध्यते, ग्रहोपग्रहाश्च निर्मीयन्ते । विसर्गे च प्रस्तरलौहप्रभृतिस्थूलपदार्थानां विनाशकाले वा परमाणवोऽन्योन्यपार्थक्यं भजन्ते । एतेनैतत्सिद्धं यत् आकर्षणं स्थूलप्रपञ्चानां सर्गस्य विकर्षणं च विसर्गस्य कारणम् । अन्तर्जगत्यपि रागेण सर्गो द्वेषेण च विसर्गो जञ्जन्यते, प्रवृत्तिहेतुभूतेन रागेणैव जनकजन्यानां पतिपत्नीनां च सम्बन्धः सुरक्षितः । तेनैव हि संपुत्पद्यमाना सृष्टिरुदेति । सुतरां प्रवृत्तेः कारणं रागः, प्रवृत्तिश्च सृष्टेर्हेतुभूता । अन्यच्च द्वेषाद्धि प्रवृत्तावरुचिरुत्पद्यते, तत एव साधकानां विषयेभ्यो वैराग्ययोत्पत्तिस्ततश्च मोक्षद्वारमपाव्रियते । विषयविद्वेषहेतुना प्रवृत्तेर्नाशो निवृत्तेरुदयश्च, येन विषयपरित्यागपूर्वकमात्मनि लयक्रियायाः सार्थकता सिध्यति । सुतरामेतदभ्युपगन्तव्यं किल यदाकर्षणविकर्षणयोराद्यं सृष्टेर्द्वितीयं च लयस्य कारणं चेति ॥ १०४ ॥

प्रसङ्गतः सर्गविसर्गयो नैसर्गिकत्वमुच्यते —

### तावतो नैसर्गिकौ ॥१०५॥

अतः कारणात् तौ सर्गविसर्गौ स्वाभाविकावित्यर्थः । त्रिगुणात्मिकाया ब्रह्मप्रकृतेः रजस्तमोभ्यामेव पूर्वोक्तशक्तिद्वयसमुदयाद्यदि सृष्टिलयक्रिया संसाध्यते तर्हीदं स्वतः सिद्धं यत् सर्गविसर्गौ नैसर्गिकौ । ब्रह्मेव तत्प्रकृतिरपि नित्या, तस्या नित्यत्वे त्रिगुणनित्यता । तथात्वे रजस्तमसोः प्रक्रियाऽपि स्वाभाविकी । सुतरां रजसः सर्गः तमसो विसर्गश्च निस्सन्देहं स्वाभाविकौ सिद्धौ ॥१०५॥

सत्त्वगुणोदयस्य विज्ञानं वर्ण्यते —

### उभयसाम्ये सत्त्वम् ॥ १०६ ॥

उभयोः रजस्तमसोः साम्ये समतायां सत्त्वमुदेति । कथमिति चेदुच्यते—बहिर्जगत्याकर्षणविकर्षणशक्त्योः समानाधिकारतायाम् अर्थाद् यदा खलु शक्तिद्वयीयं नाधिका नापि न्यूना तिष्ठति, तदैव सत्त्वगुणोदयमूलिका स्थितिदशा समुदेति । स्थूले संसारेऽत्राकर्षणात् पदार्था आकृष्यन्ते विकर्षणाच्च विकृष्यन्ते । उभयोरेव स्वाभाविकयोः शक्त्योः समत्वे ग्रहोपग्रहाः स्वस्वकक्षासु प्रवर्तन्ते । सेयं स्थितिदशा विज्ञायते । अन्तःसंसारे च रागद्वेषसमन्वये सत्त्वगुणोदयाद् विश्वधारणकर्मण्यधिकारः प्रपद्यते ॥ १०६ ॥

तदुदर्को निर्णीयते—

**स्थितिमूलमतः ॥ १०७ ॥**

अतः कारणात् सत्त्वं स्थितिमूलमवगन्तव्यम् । रजसा सृष्टिस्तमसा विलयः, उभयसाम्यसमुदितेन सत्त्वेन च स्थितिः सम्पद्यते । प्रोक्तद्विविधशक्तिसमन्वयेन चेत्सत्त्वगुणोदयस्तर्हि तयोः समतायामेव स्थितिरिति निश्चप्रचम् । रजस्तमोनामधेयद्विविधशक्तिसमन्वयेन समुदीयमाना सात्त्विकी शक्तिर्बाह्ययान्तरजगतोः, स्थूलसूक्ष्मयोः,ब्रह्माण्डपिण्डयोश्च सर्वत्रैव स्थानेषु स्थितिमुत्पादयति ॥१०७॥

प्रसङ्गेन धर्मेण सह तत्सम्बन्धं विवृणोति—

**प्रतिष्ठानं धर्मस्य ॥ १०८ ॥**

सत्त्वमेव धर्मस्य प्रतिष्ठानं वेदनीयम्, प्रागेवेदं सिद्धान्तितं यत् सत्त्वगुणवर्धकः क्रियाकलापो हि धर्मशब्दवाच्यः । सत्त्वस्य क्रमाभिव्यक्तिर्हि धर्ममूलम् । अतो यद्याकर्षणविकर्षणाख्योभयशक्तिसमन्वयेन सत्त्वगुणोदयस्तर्हि सैषा दशैव धर्मप्रतिष्ठास्थानं सिध्यति । यत्र यत्र रजस्तमोमूलकोभयविधशक्तिसमन्वयस्तत्र तत्र धर्मस्योदयो निश्चितः । यद्यपि मुख्येन गौणेन वा रूपेण राजसिकास्तामसिकाश्च धर्माः प्रतिपद्यन्ते, किन्तु त्रिगुणाधिकारविचारतो निर्णीताः सत्त्वमूलकधर्मस्यैवैतेऽवान्तरभेदा विज्ञेयाः । वस्तुतस्तु पूर्वोक्तद्विविधशक्तिसमन्वयसमुद्भूतः सत्त्वगुण एव धर्मप्रतिष्ठास्थानम् ॥१०८॥

सम्बन्धान्तरं प्रतिपाद्यते—

**विद्याक्षेत्रम् ॥ १०९ ॥**

तत्सत्त्वं विद्यायाः क्षेत्रम् स्थानमित्यर्थः । विद्यास्वरूपं निर्णीतपूर्वम् । विद्या ज्ञानजननी सत्त्वगुणमयीति चेत्तर्हि रजस्तमःशक्तिसमन्वयजनितशुद्धं सत्त्वमेव विद्याक्षेत्रमित्यत्र नास्त्यणीयानपि सन्देहावसरः । साधके यावतः सत्त्वगुणस्याधिकारो भविष्यति, तावदेव विद्याया ज्योतिर्विकासमेष्यति । सत्त्वगुणप्रवृद्धिरेव विद्या देवीकृपाप्राप्तिः । सत्त्वगुणाभिवृद्धिपूर्वकं क्षेत्रं तन्मलविक्षेपावरणविनाशेन विद्यादेव्या अधिष्ठानोपयोगितामधिगच्छति ॥ १०९ ॥

अन्यदपि —

**कैवल्यकारणं च ॥११० ॥**

तत्सत्त्वं कैवल्यस्य निःश्रेयसस्यापि कारणं निदानभूतम् । रजस्तमसोः समन्वयेन तद्द्वयमभिभूय सुप्रतिष्ठितं सत्त्वमेव यथा धर्मप्रकाशकं विद्याक्षेत्रं च, तथैव कैवल्यप्राप्तिनिदानमपि विज्ञेयम् । रजस्तमोऽभिभूय यावान् सत्त्वगुणोऽभिवर्धते तावानेवाधिकाधिको धर्मात्मा भवन् मुमुक्षुरात्मज्ञानमभिवर्धयन् ज्ञानजनन्या विद्यायाः कृपामधिगच्छन् क्रमशस्तत्त्वज्ञानाभिमुखमग्रेसरन् कैवल्यमासादयति । तस्मात् पूर्वप्रतिपादिता स्थितिः कैवल्यकारणभूताऽपि ॥११० ॥

पुनः प्रकृतविषयमनुसरति—

**कर्मणैव सृष्टिस्थितिलयान्ताः ॥१११॥**

कर्मणा खलु सृष्टिस्थितिप्रलया जायन्ते । रजसा सृष्टिः, सत्त्वेन स्थितिः, तमसा च प्रलय इति प्रसिद्धम् । एतद्गुणत्रयाधिष्ठातारः क्रमशो ब्रह्मविष्णुमहेश्वराश्च । परमेतत् क्रियात्रयमूलं कर्मैव । प्रागेवैतत्सिद्धान्तितं यत् प्रकृतेः स्पन्दनेन कर्मोत्पत्तिः, तदेव त्रिगुणकारणतां भजते । अन्यच्च सृष्टिस्थितिप्रलयाः क्रियान्तर्गता एव । तेषां फलमपि कर्मणैव सम्बद्धम् । सर्वतो महनीयोऽयं विमर्शो यत् पूर्वसंस्कारमनुसृत्यैव सृष्टिस्थितिप्रलयाः सम्भवन्ति । यथा पिण्डस्योत्पत्तिस्थितिलयमूले प्रारब्धसंस्काररूपं कर्मबीजं, तथैव ब्रह्माण्डस्यापि सृष्टिस्थितिप्रलयास्तदीयप्रारब्धसमष्टेरनुगुणा एव जायन्ते । सुतरां सर्गस्थितिसंहारकारणं कर्मैवेति सिद्धम् ॥ १११ ॥

प्रसङ्गतः सिद्धान्तं निर्णयति—

**ततो ब्रह्म ॥११२॥**

अस्मात् कारणात् तत्कर्मैव ब्रह्म यदि कर्म ब्रह्मणः सृष्टिप्रपञ्चस्य रूपान्तरेण कर्मैव कारणं तर्हि तद् ब्रह्मस्वरूपमपि बोध्यम्। यथोक्तं भगवता गीतोपनिषदि—

**"कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्,**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्" ॥इति॥**

वस्तुतो यदि ब्रह्मणि तदङ्कनावभेदः, तस्याश्च कर्मणा भेदाभावस्तदा कर्मैव ब्रह्म स्वरूपमिति सिद्धान्तः ॥ ११२ ॥

कर्मविशेषमुपवर्ण्यते—

**यज्ञः कर्म सुकौशलम् ॥११३॥**

सुकौशलं कौशलपूर्णं कर्म यज्ञशब्दवाच्यम्। यज्ञलक्षणसम्बन्धे स्मृतावप्युक्तम्—

**"एवं यज्ञस्तथा धर्म उभौ पर्यायवाचकौ।**
**कथितौ वेदनिष्णातैः शास्त्रज्ञैः शास्त्रविस्तरे" ॥इति॥**

ग्रन्थे निर्मितिर्विमुक्तिश्च कर्मैव प्रतिपाद्यते। एकया रज्जवो जटिलत्वमन्यया च सौम्यत्वमासादयन्ति। उभयत्रापि करस्खालनं कर्म समानमेव। एतावानेव तत्र भेदो यत् सौम्यत्वसम्पादनं सुकौशलपूर्णं कर्म न खलु जटिलत्वापादनम्, एवमेव जीवेन निरङ्कुशतया सम्पादितं कर्म सुकौशलपूर्णत्वाभावादधर्मस्तेन च गमागमबन्धनं जटिलायते। स्वविवेकमनुसृत्य वेदशास्त्रगुर्वाचार्यप्रतिपादितकर्मानुष्ठानेन सुकौशलपूर्णत्वाद् गतागतबन्धनं शिथिलायते। तादृशं कर्मैव धर्मो यज्ञो वा शक्तिविचारतो धर्मक्रियाविचारेण च यज्ञ उच्यते। वैदिकयज्ञाः स्मार्तयज्ञा तपोदानोपासनायोगज्ञानयज्ञाश्चेत्यादयः शास्त्रोक्ता विविधप्रकारा यज्ञा निर्दिष्टाः ॥ ११३ ॥

इदानीं महायज्ञलक्षणं निर्दिशति—

**समष्टिसम्बन्धान्महायज्ञः ॥ ११४ ॥**

समष्टिसम्बन्धेन हेतुना सुकौशलपूर्णं कर्म महायज्ञस्वरूपतां भजते। यज्ञमहायज्ञयोर्विभेदमाख्यातुं पूज्यपादमहर्षिः सूत्रमिदमाविरभावयत्। यज्ञेन सह महाशब्दस्य पूर्वसंयोगो नार्थवादपरो निरर्थकः। जीवनस्य व्यष्टिगतमभ्युदयनिःश्रेयसप्रदं सुकौशलपूर्णं कर्म तु यज्ञोऽभिधीयते, यस्तु जीवसमष्टिहिताधायकेन ब्रह्माण्डकल्याणसाधकेन वा सुकौशलपूर्णकर्मणा धर्मः संसाध्यते, स हि महायज्ञः प्रोच्यते। स्वार्थग्रहग्रस्तसाधारणमानवान्तःकरणेषु नैव महायज्ञमहिमा स्थानमधिगच्छति। साधको हि क्रमशः स्वार्थप्रवणतायाः ह्रासेन परार्थपरतोदारतादिप्रवृद्ध्या च महायज्ञाधिकारी जायते। यथा च प्रतिपादितम्—

**"अयं निजः परो वेति गणना लघुचेतसाम्**
**उदारचरितानां तु वसुधैव कुटुम्बकम् ॥**
**माता च पार्वती देवी पिता देवी महेश्वरः**
**बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥"**

एवं हि भुवनत्रयमेव स्वकुटुम्बकं मन्यमानैरुदारचित्तमहापुरुषैरेव महायज्ञानां महत्त्वमवगन्तुं शक्यते, तदधिकारिता चासाद्यते। जैवस्वार्थराहित्यात् परोपकारभावसम्बलितत्वात् समष्टिसमुन्नतिसहायकत्वात् भगवत्कार्यरूपत्वाच्च तादृशं धर्मकार्यं महायज्ञ इत्युच्यते ॥ ११४ ॥

तदधिकारवर्णनमारभते—

**उदारमनुष्ठेयस्तुरीयेऽप्येषः ॥ ११५ ॥**

तुरीये चतुर्थाश्रमेऽप्येष महायज्ञः उदारतापूर्वकम् अनुष्ठयोऽनुष्ठातु योग्यः। उदारान्तःकरणवन्तो महापुरुषाः किल महायज्ञानुष्ठानेऽधिकृता इति पूर्वं प्रतिपादितम्। महायज्ञस्योदारतायुक्तत्वादौदार्यादिगुणाभ्यासनिरतानां गृहाश्रमवासिनां का कथा, चतुर्थाश्रमाणां संन्यासिनां कृतेऽपि महायज्ञानुष्ठानं विहितम्। चतुर्थाश्रमे कर्मणां यागादिसाधनानां परित्यागे शास्त्रविहितेऽपि निरतिशयसमुन्नतत्वात् तत्रापि महायज्ञसाधनं कल्याणदं सर्वलोकहितकरं च। तुरीयाश्रमे निवृत्तैश्चरितार्थता भगवद्भावापन्नं चान्तःकरणम्, अतः

समुन्नतदशायाम् उदारतायाः पराकाष्ठाधिगमाय तत्रापि महायज्ञानुष्ठानं विहितम्। अतो हि चतुर्थाश्रमवन्तो महात्मानस्तत्त्वज्ञानिनो लोकहिताधायके कार्यकलापे निरता दृश्यन्ते। तादृशमहात्मनां व्रतानि, जगदाध्यात्मिकसमुन्नतिचिन्तनानि, कर्मयोगमद्ग्रन्थप्रणयन-जिज्ञासुहितसाधकोपदेशदानादीनि महायज्ञपरिचायकान्येव ॥ ११५ ॥

अन्यच्च—

**महीयांस्ततोऽसौ ॥ ११६ ॥**

अतः कारणदसौ महायज्ञो महीयान् सर्वश्रेष्ठ इत्यर्थः। उदारचरितमहापुरुषा हि केवलं महायज्ञाधिकारिणः। सम्पूर्णरूपतः कर्मणां परित्यागोपदेशात् तुरीयाश्रमेऽपि महायज्ञानुष्ठाननिदेशः। सर्वमिदं महायज्ञस्य महिम्नो विजृम्भणम्। गृहस्थाश्रमेऽपि पञ्चमहायज्ञानुष्ठान-शिक्षा प्रारभ्यते। पञ्चमहायज्ञानुष्ठानाभावे गृहस्था महादोषभागिनो जायन्ते। सर्वमिदं महायज्ञमाहात्म्यसूचकम्। ज्ञानाधिष्ठातॄणाम् ऋषीणां संवर्द्धनिमित्तकं वेदशास्त्रमननं ब्रह्मयज्ञः, कर्मसञ्चालकदेवतासंवर्धनहेतुकं हवनादिकं देवयज्ञः, आधिभौतिकसृष्टिसंरक्षकाणां पितॄणां तृप्तिसाधकं श्राद्धतर्पणादिकं पितृयज्ञः, समस्तप्राणिसंरक्षकनानारूपनैमित्तिकदेवता-सम्बर्धनपूर्वकं सर्वजीवमंगल कामनया क्रियमाणं भूतेभ्यो बलिसमर्पणं च भूतयज्ञः, निखिलमानवसमाजसमीपकृतज्ञताप्रकाशहेतुकं स्वाश्रमसमागतेभ्यश्चाण्डालेभ्योऽपि नारायणबुद्ध्या भोजनादिदानं नृयज्ञ इत्युच्यते। तत्प्रमाणं

शास्त्रेष्वपि लभ्यते। तथाहि -

**पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः।**
**एते पञ्च महायज्ञा ब्रह्मयज्ञादि नामकाः॥**
**दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च।**
**एते पञ्च महायज्ञा ब्रह्मणा निर्मिता पुरा॥**
**इति ॥ ११६ ॥**

द्वयोः परिणतिमभिधत्ते—

**ताभ्यामभ्युदयनिःश्रेयसे ॥ ११७ ॥**

ताभ्यां यज्ञमहायज्ञाभ्यामभ्युदयनिःश्रेयसे ज्ञातव्ये। व्यक्तिगतं धर्मसाधनं यज्ञस्वरूपं तर्हि तेन जीवस्याभ्युदयो निर्विवाद एव। व्यक्तिजैवस्वार्थराहित्यात् जगत्कल्याणधिया साध्यमानत्वाच्च महायज्ञेन मोक्षसिद्धिर्नूनं सम्भवा। जैवाहङ्कार जनितस्वार्थबुद्धिर्हि केवलं मौलिकं बन्धनकारणं चेत् महायज्ञे तत्सम्बन्धाभावस्तं हि महायज्ञेन निःश्रेयसाधिगमे कः सन्देहः। किं यज्ञसमूहः केवलमभ्युदयप्रद एव नासौ मोक्षप्रदः? यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः इति सिद्धान्तचारितार्थता कथं स्यादिति जिज्ञासुशङ्कासमाहितये स्वयमुक्तं भगवता श्रीगीतोपनिषदि, तथाहि —

**"यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर॥**
**तस्मादसक्तः सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पुरुष" इति ॥**

तात्पर्यमिदं यत् यथा महाज्ञेन निःश्रेयसप्राप्तिस्तथैव यज्ञेनापि तदधिगमः सम्भवः, किन्त्वसौ निष्कामभावेन फलाभिसन्धित्यागपूर्वकं क्रियमाणो यज्ञो महायज्ञवन्निःश्रेयसप्रदाता। अन्यथाऽसावभ्युदयद एव॥ ११७ ॥

प्रसंगतोऽभ्युदयनिःश्रेयसयोः पूर्णाधिकारप्रदोऽयमार्यधर्मः पूर्णचन्द्रेणोपमीयते —

**षोडशकल आर्यधर्मः पूर्णचन्द्रवत् ॥११८ ॥**

अस्यार्थः सुस्पष्टः।

प्रथमकला निरूप्यते—

**तत्र प्रथमा सदाचारो व्यापकत्वात् ॥११९॥**

षोडशकलासु प्रथमा सदाचार एव यतोऽसौ व्यापकः॥ ११९ ॥

तद्वैशिष्ट्य प्रणिगद्यते—

**अतः आर्यसंस्कृतेर्महत्त्वम् ॥ १२० ॥**

अतः कारणदेवार्यसंस्कृतेर्महत्त्वं विद्यते । धर्मानुकूलः शारीरिको व्यापारकलापः सदाचार उच्यते । मनोबुद्धिवचनशरीरव्यापारभेदेन चतुर्विधं कर्म मानवैरनुष्ठीयते । नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदितिगीतोक्तिः । अतो धर्मवर्धकः शारीरिको व्यापार एव सदाचारः ॥ १२० ॥

द्वितीयकलास्वरूपं निर्णीयते—

**सद्विचारोद्वितीयार्यजातेः शिखासूत्रधारित्वात् ॥१२१॥**

आर्याणां शिखायज्ञोपवीतधारित्वात् सनातनधर्मस्य द्वितीया कला सद्विचारः । यथा हि धर्मानुकूला शारीरिकी चेष्टा सदाचारस्तथैव धर्मानुकूलो मानसिको व्यापारः सद्विचार इत्युच्यते । यथोक्तं गीतोपनिषदि

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥**

विवेकयुक्तेनमनसा जीवमुपर्युत्थापयेत् । इन्द्रिययुक्तं मनो नीचैर्नपातयेत्, विवेकेन संयुक्तं मनोजीवस्य मित्रं तद्भिन्नं तदीयः शत्रुरितिनिर्गलितार्थ एव सद्विचारतात्पर्यमवगन्तव्यम् । आर्यजातीया सर्वविधापि चेष्टा विवेकसंयुक्ता । अतः सद्विचारशीलो धार्मिको व्यवह्रियते । शिखासूत्रमप्येतद्द्योतकमेव । शिरसि ब्रह्मरन्ध्रस्थाने गोखुरसमानकेशपुञ्जसंवर्धनं शिखेत्युच्यते । वामस्कन्धमाश्रित्य दक्षिणबाहुनिम्नभागे कटिपर्यन्तं लम्बायमानं परमं पवित्रं विलक्षणप्रभावोत्पादकं पूर्णायुःप्रदम् शास्त्रविधिनिर्मितं नवतन्तुयुनवदेवाश्रयस्वरूपम् प्रवरर्षिचिह्नितम् ग्रन्थित्रये च त्रिदेवाश्रभूतम्, द्विजातिभिरुपनयनसमये धारितं यज्ञसूत्रमित्युच्यते । द्विजानां सर्वविधशरीरमनोव्यापाराणां धर्मरूपयज्ञमयत्वात् कदापि द्विजैर्न तत्त्याज्यमितिशास्त्रनिर्देशः, उक्तं चस्मृतिशास्त्रे—

**"सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।**
**विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्" ॥इति॥**

अतो वर्णाश्रमावलम्बिभिरार्यैर्ध्रियते किल शिखासूत्रम् सुतरामार्यधमस्य द्वितीया कला सद्विचार एव ॥ १२१ ॥

शिखासूत्रोदर्कमाचष्टे—

**शिखा देवमन्दिरस्य सूत्रं त्रिभावशुद्धेः ॥ १२२ ॥**

शिखा देवमन्दिरस्यशिखर यज्ञसूत्रं त्रिभावशुद्धेः सूचकम् । शिखायाः कारणेनार्यजातेरुत्तमाङ्गं शिरो देवमन्दिरस्य विशिष्टं स्थानमवगम्यते, शिखास्वरूपमन्दिरप्रदेशे ब्रह्मविष्णुशिवादिदेवानां निवासः । शिखा किलार्याणां विशिष्टं चिन्हं, तया द्विजातेर्बुद्धिर्निर्मलत्वमापद्यते । देवमन्दिरे शिखरमिवार्यशरीररूपमन्दिरस्य शिखा शिखरमभ्युपगन्तव्यम् । शिखराबन्धनमन्त्रो यथा—

**ब्रह्मवाणीसहस्रेण शिववाणीशतेन च ।**
**विष्णुवाणीसहस्रेण शिखाबन्धं करोम्यहम् ॥**

शिखामूले सर्वदेवनिवासः । त्रिभावशुद्धिद्योतकं यज्ञोपवीतम्, अध्यात्माधिभूतत्रिविधशुद्धिस्मृतिसंरक्षणत्वात् यज्ञमयजीवनयापनत्वाच्चार्याः त्रिगुणितं यज्ञसूत्रं धारयन्ति॥१२२॥

तृतीयां कलां व्याचष्टे—

**वर्णधर्मस्तृतीयाऽतस्तत्पूर्णा ॥ १२३ ॥**

वर्णधर्मस्तृतीया कला, तयैवार्यजातिः पूर्णा त्रिविधभावशुद्धिपूर्णेत्यर्थः ।

तस्या महत्त्वमभिधत्ते—

**चिरजीविनी च ॥ १२४ ॥**

वर्णधर्मादार्यजातौ रजोवीर्यशुद्धिरितिहेतोः सा चिरजीविनी सदैव जीवितुं शक्नोतीत्यर्थः । आसृष्टेरिदानीं यावदियं विद्यमाना, किन्त्वनेका अन्या जातय कालकवलतामापाः । अत आर्यजाति जीवनहेतुवर्णधर्म एव ॥ १२४ ॥

सोपपत्तिकं चतुर्थी कला निरूप्यते—

**चतुर्थी सतीत्वं नार्याः पूर्णत्वात् ॥ १२५ ॥**

# रस-स्वरूप-विमर्शः भक्तिरसश्च

—पूज्य श्री करपात्रस्वामिनः—

एतेन—'दुष्यन्तादिनिष्ठस्य रत्यादेरनास्वाद्यत्वान्न रसत्वम्। स्वनिष्ठस्य तु तस्य शकुन्तलादिभिरतत्सम्बन्धिभिः कथमभिव्यक्तिः? स्वस्मिन् दुष्यन्ताद्यभेदबुद्धिस्तु बाधबुद्धि-पराहता' इत्यादिकमपास्तम्।

अन्यमतरीत्याऽपि—काव्येन शकुन्तलादिशब्दैः शकुन्तलात्वादिप्रकारक-बोधजनकैः प्रतिपाद्यमानेषु शकुन्तलादिषु दोषकल्पनं विना विभावादीनां साधारणीकरणं नोपपद्यते। एवमवश्यकल्प्येन तेनैव दोषविशेषेण स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरप्युपपद्यते।

ननु रतेर्दुष्यन्त इव सहृदयेऽपि सुखविशेषजनकत्वे करुणरसादिषु स्थायिनः शोकादेर्नायक इव सहृदयेऽपि दुःखजनकत्वमस्त्विति चेन्न। तत्र केवलाह्लादस्य सहृदयहृदयप्रमाणकत्वेन लोकोत्तरकाव्यव्यापारस्यैव आह्लादजनकत्ववद् दुःखप्रतिबन्धकत्वस्यापि कल्पनेन तददोषात्।

अन्यैस्तु—व्यञ्जनाव्यापारस्य अनिर्वचनीयख्यातेश्चानुपगमेऽपि प्रागुक्तदोषमहिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरतिमदभेदबोधो मानसः काव्यार्थभावनाजन्मा विलक्षणविषयताशाली रसोऽभ्युपेयते।

ननु चैवं स्वस्मिन्नविद्यमानस्य रत्यादेः कथमनुभव इति चेन्न। लौकिकसाक्षात्कार एव विषयसद्भावस्यावश्यकत्वेन भ्रमरूपे स्वात्मनिष्ठे रत्यादिसाक्षात्कारे तदनपेक्षणात्।

आचार्याभिनवगुप्तरीत्या तु स्थायिनां विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धात् विभावादीनामेव वा परस्परं संयोगान्मिलनाद् रसनिष्पत्तिरिति सूत्रार्थः। तथा हि—लोके प्रमदादिभिः कारणादिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासेन यत्पाटवं झटिति प्रवृत्तिस्तद्वतां सभ्यानां सूक्ष्मतयाऽन्तःस्थितो रत्यादिः स्थायी काव्ये नाट्ये च गुणाऽलङ्कारयोगात् कायिक-वाचिका-ऽऽहार्य-सात्त्विक-चतुर्विधाभिनयेन च यथोक्तविभावनादिव्यापारवत्त्वाद् अलौकिक-विभावादिशब्दव्यपदेश्ययोग्यदशाविशेषविशिष्टैस्तैरेव कारणादिभिर्व्यज्यते। येषां तु पूर्वं रत्यादिर्नोत्पन्नस्तेषां तद्वासनाविरहिणां रसाभिव्यक्तिर्नास्त्येव। तेन शृङ्गारिणामेव शृङ्गारस्य निर्विण्णस्वभावानामेव च शान्तस्याभिव्यक्तिरित्यनुभूयते। तत्रापि सहृदयतारूपा स्वाभाविकी वासनापि सहकारिणी यां विना शृङ्गारिणामिव मीमांसक-वैयाकरणादीनां न रसाभिव्यक्तिः। तदुक्तम्—

'वासना चेन्न हेतुः स्यात् स स्यान्मीमांसकादिषु।'

ननु—अन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिरिति चेन्न। 'ममैवैते, शत्रोरेवैते, तटस्थस्यैवैते, न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवैते' इति सम्बन्धविशेषस्वीकार-परिहारनियमानध्यवसायात् साधारणीकरणाभ्युपगमात्। तथा च साधारण्येन प्रतीतैस्तैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलित-परिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीक्रियमाणश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर

इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवा-लिङ्गन्, अन्यत्सर्वमिव तिरोदधद् ब्रह्मानन्दास्वाद-मिवानुभावयन्, अलौकिकचमत्कारकारी शृङ्गारा-दिको रसः। तदुक्तं पण्डितराज-जगन्नाथेनापि स्वीये 'रसगङ्गाधरा'ख्ये ग्रन्थे—

"समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलित-दुष्यन्तरमणीत्वा-दिभिः अलौकिक-विभावानुभावव्यभिचारिशब्द-व्यपदेश्यैः शकुन्तलादिभिरालम्बनकारणैः चन्द्रिका-दिभिरुद्दीपनकारणैरश्रुपादिभिः कार्यैः चिन्तादिभिः सहकारिभिश्च संभूय प्रादुर्भावितेन अलौकिकेन व्यापारेण तत्कालनिर्वर्तिता-ऽऽनन्दांशावरणाज्ञानेन, अत एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः स्मृत' इति। व्यक्तो व्यक्तिविषयी-कृतः। व्यक्तिश्च भग्नावरणा चित्। यथा शरा-वादिना पिहितो दीपस्तन्निवृत्तौ सन्निहितान् पदा-र्थान् प्रकाशयति स्वयञ्च प्रकाशते, एवमात्मचैतन्यं विभावादिसंवलितान् रत्यादीन् प्रकाशयन् स्वयञ्च प्रकाशते" इति।

अन्तःकरणधर्माणां साक्षिभास्यत्वाभ्युपगमात् स्वप्नतुरगादिवत् रङ्गरजतादिवद् वा विभावादीना-मपि साक्षिभास्यत्वमेव। व्यञ्जकविभावादि-चर्वणाया आवरणभङ्गस्य वा उत्पत्ति-विनाशाभ्यां रसे उत्पत्ति-विनाशौ उपचर्येते। विभावादिचर्वणा-वधित्वाद् आवरणभङ्गस्य निवृत्तायां तस्यां प्रकाश-स्याऽऽवृतत्वाद् विद्यमानोऽपि स्थायी न प्रकाशते।

यद्वा—विभावादिचर्वणामहिम्ना सहृदयस्य तत्सहृदयतोन्मिषितेन तत्तत्स्थाय्युपहित-स्वरूपा-नन्दाकारा योगिनः समाधाविव काव्यव्यञ्जनामूला आनन्दविषयतया तत्प्रचुरचित्तवृत्तिरुपजायते। वृत्तेः आनन्दलीनप्रायत्वात् पूर्वोक्तरीत्या विगलित-परिमित - प्रमातृत्वादिधर्मत्वाच्च अस्यानन्दस्य अन्तःकरणवृत्त्यनवच्छिन्न - शुद्धचैतन्यरूपत्वेन वृत्त्यवच्छिन्नचैतन्यरूपेभ्यः सुखेभ्यो वैलक्षण्यम्। तथा च भग्नावरणचिद्विशिष्टो रत्यादिः स्थायिभावो रसः, **रसो वै सः** इति श्रुत्यनुरोधेन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव वा रस इत्याहुः। विशिष्टा-त्मनस्तस्य विशेषणं वा चिदंशमादाय नित्यत्वं स्वप्रकाशत्वञ्च सिद्ध्यति। रत्याद्यंशमादाय अनित्यत्वमपि। सा च शब्दव्यापारभाव्यत्वात् शाब्दी, अपरोक्षसुखालम्बनत्वाच्च अपरोक्षा-त्मिका। चर्वणाऽपि चास्य चिद्गतावरणभङ्ग एव, प्रागुक्ता तदाकारा वृत्तिर्वा। तादृशस्य रसस्य विभावादिविषयसंवलित - चिदानन्दालम्बनत्वेन परब्रह्मास्वादात् समाधेर्विलक्षणत्वेन ब्रह्मानन्दसहो-दरत्वोक्तिः।

तथा च विभावादीनां साधारणीकरणरूप-व्यापारेण फलबलकल्प्येन विशेषणांशस्य सर्वथा प्रमोषात् सामाजिकेषु स्थायी व्यज्यमानो रसः 'दशमस्त्वमसि' इतिरीत्या शाब्दापरोक्षाभ्युपगमेन नापरोक्ष्यानुपपत्तिरपि। ईदृशालौकिकव्यापारमाहा-त्म्येन करुणरसे दुःखजनकतया क्लृप्तेभ्योऽपि सुखो-त्पत्तेः सुरतेऽधरदशनादाविव अनुभविकत्वात् अन्तः-करणवृत्तित्वात् कार्यत्व-ज्ञाप्यत्वाभावाद् भूत-वर्त-मान-भविष्यत्वराहित्यात् सविकल्प-निर्विकल्पवेद्य-त्वाभावाच्च रसस्य अलौकिकत्व-नित्यत्वा-ऽऽनन्द-रूपत्व-स्वप्रकाशत्वादिकं सिद्धम्। चर्वणानिबन्ध-नश्च उत्पादविनाशित्व - कादाचित्कत्वादि - व्यव-हारोऽपि तत्र सङ्गच्छते।

अत्रेयं समीक्षा—रत्यादिस्थायीभावस्य आलम्बन-विभावं (कारणं) दृष्ट्वा श्रुत्वा च तत्र रामादि-चरिते सत्यभिनये सीतादिकमालम्बनं दृष्ट्वा रामादेरनुकार्यस्य रत्याद्युदयो न नटस्य न वा सामाजिकस्य, नटस्य सीतादौ विभावबुद्धेरनुदयात्। न च सीताद्यभिनेत्र्यां विभावादिबुद्धिसम्भवः; तथात्वे स्वभावाभिनयप्रसङ्गापातेन रामादिरत्यभि-नयस्य पर्याकुलीभावात्। तस्यास्ताटस्थ्ये नायिका-भूमिकायां पुरुषेऽभिनेतरि च सर्वथा विभावबुद्धे-रसम्भव एव। सामाजिकानामपि सीतादौ मातृबुद्ध्या विभावादिधियोऽनुदयात् पररहस्यदर्शनेन व्रीडा-ऽऽतङ्कादिसम्भावनया नानया रसानुभूतिसम्भवः। कथञ्चित् तत्र सम्भवेऽपि करुणादौ पुत्रवियोगातुरस्य मृत्युदृश्ये कस्य सामाजिकस्य स्वपितृमरणबुद्धि-रुदेति ? अनुकार्यगतोऽपि न स्थायी; तदानीं तदनु-पस्थितेः। रूपके कथञ्चित्सम्भवेऽपि श्रव्ये तदसम्भव एव। तथा हि—श्रव्ये कविः वर्ण्यः, श्रोता चेति पक्षत्रयम्। तत्र न कवौ; रामादेरिव सीतादिं प्रति रत्याद्यनुदयात्। नापि वर्ण्ये; तदनुपस्थितेः। नापि श्रोतरि; सीतादिं प्रति तस्यापि रत्यसम्भवात्। नापि स श्रोता कविगतं वर्ण्यगतं वा स्थायिभाव-माश्रयेत; तयोर्भावैक्यासम्भवात्। पतिव्रतायां पत्न्यां कवेः श्रोतुर्वा न भावोदयः सम्भवति। कुमारसम्भवे रघुवंशादौ च गौर्यादौ शिवस्येव कवेः पाठकस्य वा न रत्युदयः सम्भवति, देवयोनिभूतायां मानुष-रतेरसम्भवात्।

तत्र भट्टलोल्लटादिरीत्या अनुकार्ये अनुकर्तरि चासन्नपि रसोऽनुसन्धानबलात् सामाजिकेषु प्रती-यते। शङ्कुकरीत्या तु विभावैरनुभावैर्व्यभिचारि-भिश्च प्रयत्नार्जिततया कृत्रिमैरपि तथानभिमन्य-मानैः अनुकर्तृस्थत्वेन लिङ्गबलेन प्रतीयमानः स्थायिभावो मुख्यरामादिगत-स्थाय्यनुकरणरूपो रसः सामाजिकैरनुमीयते। तत्रापि कथमनु-कार्येऽसन्तं स्थायिनमनुमिमीते ? कुमारसम्भवादौ कवेः शिव-पार्वतीविषया रतिस्तयोश्च अन्योन्य-विषयेति भिन्नाश्रयोऽयं व्यवहारः। कविस्तयो रतिं वर्णयतीति स्वीक्रियते चेत्, तर्हि तस्य रतेरपलापः। न च कविः सर्वथाऽरतिकः सम्भवति। श्रोता च तदुभयविहीनः कथं रसमनुभवेत् ? उभयविधामपि रतिं स्वदते चेत्, कतरस्यास्तत्र रसरूपेण परिणतिः ? इत्युभयतः पाशारज्जुः।

भट्टनायकरीत्या अभिधया काव्यार्थे बोधिते भावकत्वव्यापारसंज्ञेन विभावादिसाधारणीकरण-व्यापारेण श्रव्यादौ निर्दोषकाव्येन नाट्ये चतुर्भि-रभिनयरूपेण रसो भाव्यते। तत्र किमसामान्यस्य लोकोत्तरस्य विभावादेः सामान्यीकरणम्, लौकिकी-करणमेव साधारणीकरणम्, किं वा व्यक्तिविशेष-गतस्य आश्रयनिर्विशेषभावापादनेन, सर्वगतत्वा-पादनं वा ? प्रथमे पक्षे तु कविदृशा विभावादीना-मलौकिकत्वमेव मम्मटादिभिरुपवर्णितम्। तस्य लौकिकत्वापादनं दूषणमेवेति असाधारणस्य व्यक्ति-विशेषनिष्ठस्य साधारणीकरणम्। विशेषगतत्वा-कारक - भेदराहित्यापादनमेव तदाशयो मन्तव्यः। तत्रापि विभावादिसंवलितो यदि स्थायी न सामा-जिकगतः, तर्हि कथं तस्य अन्यस्थायिना रसानु-भूतिः ? यदि वर्तते तदाऽनुकार्यस्य सामाजिकस्य च स्थाय्यालम्बनादिभेदे कथं द्वयोः सामान्यी-करणम् ?

तत्र अभिनवगुप्तरीत्या विमलप्रतिभः सहृदयो 'ग्रीवाभङ्गाभिरामम्, उमापि नीलालक' इत्यादि-वाक्येभ्यो वाक्यार्थं प्रतिपद्य वाक्योपात्तदेशकालादि-विभागराहित्येन वस्तुतो मानससाक्षात्कारात्मिकां

प्रतीतिमधिगच्छति। सत्याञ्च तस्यां मृगपोतकादिभीतिवर्णने वैशिष्ट्यावगाहिज्ञानराहित्येन केवलं भीत इति ज्ञानम्, भयकारणस्य वस्तुनः तदानीमसत्त्वेन देशकालादिविशेषज्ञानविरहितस्य भयस्यैव प्रतिपत्तिः। ततश्च 'भीतोऽहम् भीतो मम शत्रुर्मित्रं तटस्थो वा' इति ज्ञानेभ्यो दुःखसुखादिमूलबुद्ध्यन्तरोदयनियमवत्ताया विघ्नबहुलेभ्यो ज्ञानेभ्यो विलक्षणं निर्बाधप्रतीतिविषयं साक्षादिव स्वहृदयवर्तिनमिव भयानकं रसं स्वदते। तथाविधे स्वादे 'किं गतं किं मूलं भयम्' इति विशेषस्य ज्ञानमेव नोदेति। तदेव भयाश्रयेण मृगपोतादिना सह सामाजिकस्य साधारणीकरणम्।

यद्यपि च विभावादिसहितरसप्रतीतौ कथं विभावादिनापि साधारण्यम्? अपारमार्थिकत्वेऽपि काव्यार्थपरिशीलनवशात् विभावादिप्रतिपत्तिर्भवत्येव। सत्याञ्च तस्यां तत एव आलम्बनाद्भयादेरनुदय एव प्रसज्येत। न च केवलेन विशुद्धेन स्थायिना रसः प्रतीयते; तथापि यथा पानकरसे काश्मीरोशीर - मरीच्यादि - विविधरसानुभूतावपि विशिष्य आकारेण न तेषां ग्रहणम्। यथा वा माणवकाध्ययनध्वनिषु पुत्राध्ययनध्वनिप्रतीतावपि न विशिष्याकारेण प्रतीतिः, तथैव आलम्बनविभावादिप्रतीतावपि साधारणीकरणव्यापारेण विशिष्टप्रतीतिर्न भवतीति न काचिदनुपपत्तिः।

यदुक्तम्—'सीताद्याः कथं स्त्रीमात्रपर्यवसायिन्यः, पुत्र्यां भगिन्यां वा रत्यादिं कथं न जनयेयुः' इति। तदपि तुच्छम्; भगिन्यादिबुद्धीनां तत्प्रतिबन्धकत्वकल्पनेन दोषाभावात्। नाटचदर्पणरीत्याऽपि रसो नियतानियतविषयो विशेषसामान्याकारोभयविधो भवति, सामाजिकानां रसास्वादः स्त्रीसामान्यविषयो भवति। तद्रीत्या आत्मगतसंस्कारोपहितः सुखात्मा रसः काव्यार्थभावनोद्बुद्धोऽनुभवविषयतां याति।

यदुक्तम्—"यदि काव्यगतैर्विभावादिभिः प्रतिपत्तृगतः स्थाय्यादिरुद्बोध्यते, तर्हि रामादिगतस्थायिना सह सामाजिकरतेः न कोऽपि सम्बन्धः सिद्ध्यति। स्याच्चेत् किंमुखः किमाकारकश्चेति।" तदपि न; काव्यार्थभावनाहेतुत्वेन रामादिस्थायिनोऽपि तदुपयोगेन दोषाभावात्। यदि सामाजिकैः स्थायिसंस्कारो रसानुभूतौ नोपयुज्येत, तदा सहृदयानामेव रसास्वादनियमो न स्यात्। साहित्यदर्पणे साधारणीकरणप्रभावेण हनुमदादिगतं समुद्रलङ्घनोत्साहं प्रतिपद्यते। तदसामर्थ्येऽपि 'देवाभिन्नोऽहमि'त्येवंविधायां बुद्धौ जातायां तादृशसामर्थ्यानुभवोऽपि। क्वचिद्वाराणस्यां हनुमद्भावापन्नेन मनुष्येण तादृगुत्साहेनैव वरुणा उल्लङ्घिता।

केषाञ्चिद्रीत्या भावनादोषेण शुक्तिकाशकले रजतबुद्धिरिव आत्मन्यपि रामाद्यभेदबुद्धिः। विभावादीनामपि तेनैव भावनादोषेण साधारण्यं जायते। तेनैव शकुन्तलादिषु स्वस्मिन् दुष्यन्ताद्यभेदबुद्धिमुत्पाद्य गम्यत्वबुद्धिरपि समुद्भाव्यते। योगवासिष्ठादिषु काव्यादिकथार्थस्य प्रातिभासिकत्वमङ्गीकृतमपि, काव्यादीनामेव तादृग्भावनोद्भावकत्वात्।

केचित्तु—भावप्रवणस्य कवयितुः स्वकल्पनासक्तया वर्ण्यप्रतिबिम्बोपस्थित्या काव्यनाटकादिनिर्मितिः, तच्छ्रोतुर्द्रष्टुश्च काव्यप्रभावेण कवयितुर्भावेन तादात्म्यं साधारणीकरणम्।

अन्यैस्तु—पाठकादेर्भावस्य कवेर्भावेन तादात्म्यस्थापनं साधारणीकरणम्।

परैस्तु—काव्यादिद्वारेण कविस्तांस्तान् भावान् प्रस्तुवन् सहृदयानां सुप्तं भावलोकं क्षोभयति।

( शेषांशः १३५ पृष्ठे )

पूर्वतोऽनुवृत्तम्—४३

# क्षत्रपति-महाकाव्यम्

—श्री उमाशङ्करशर्मा त्रिपाठी—

[ आंग्लभाषा-प्राध्यापकः—काशी विद्यापीठस्य, वाराणसी ]

दस्युजात ! विरमाऽसि-लाघवाद्
वीक्षसे न किमु पाप मामिह।
शस्त्रिणां विततमुज्ज्वलं यशो
दूषयन्निव न लज्जसे कथम् ॥ ५९ ॥

विस्तृतेऽपि शठ ! सङ्गराङ्गणे
श्लाघ्यमृत्युमपहाय कातरः।
सारमेय ! शयनालसोऽसि
दंशनैः स्वचरितं विकत्थसे ॥ ६० ॥

सत्ववृत्तिरपि नागकुम्भभित्
केसरी न शयितान् जिघांसति।
ब्रूहि कोऽसि मनुजाभिधाऽधम !
क्रौर्यनिर्जित - निशाचरप्रथः ॥ ६१ ॥

धर्मराज ! विरमाऽऽत्मगौरवात्
कौतुकं त्वमपि वेत्सि पद्धतिम्।
आत्मनाऽपि चरितं त्वयास्ति किं
मत्कृते यदभिधीयते गुरो ॥ ६२ ॥

अन्यगेव किमु धर्मकल्पना
त्वं जितत्रिगुणवृत्तिरेव वा।
जिह्मभृत्य ! नहि वाचि केवलं
किन्तु तिष्ठति विधौ सदर्थता ॥ ६३ ॥

राजपुत्ररुधिरं विरुन्धता
यत्त्वया ऽरिपदपांसुचुम्बिना।
पातितास्तमसि देशवासिन-
स्तद्वही रुधिरमेष्यति ध्रुवम् ॥ ६४ ॥

म्लेच्छदास ! यवनास्तवेश्वरा
येन धर्ममहितेन वर्त्मना।
दुर्बलानपि दहन्त्यकारणं
विस्मृतः कथमसौ सदाग्रहः ॥ ६५ ॥

त्वादृशां जनन-मृत्युकण्टकं
नित्यमेव शठ निन्दितायुषाम्।
जन्मिनस्तु सकृदेव मादृशा
अर्चितस्वविधयः श्रयन्ति तत् ॥ ६६ ॥

दुर्जनाः वयममी च सज्जनाः
याऽभिवक्ति रसना तवेत्वरी।
साऽद्य नूनमसिधारमज्जिता
मौनमेतु गलितायुषस्तव ॥ ६७ ॥

शिक्षयन् निगमशंसितानि नो
मातृभूमि - परतन्त्रताच्छिदः।
तांश्च जाल्मचरितान् प्रमाणयन्
किं द्विजिह्व न विलज्जसे स्वयम् ॥ ६८ ॥

तद्वनेचरनिभा वयं मृगान्
त्वादृशां मृगयितुं धृतव्रताः।
यूथमेव दधतः पुरो दृशां
नूनमद्य विधयः सदक्षिणाः ॥ ६९ ॥

वीक्ष्य मालसुरमेवमुद्धतं
रोद्धुमेव रिपुखड्ग-पन्नगी।
ह्लादिनीव नयनांशु - मोहिनी
तर्पतप्त-हृदयेव तत्वरे ॥ ७० ॥

लक्ष्यबद्धमनसोः स्थिराक्षयोः
सिद्धहस्तयशसोः रणोद्यमः।
विग्रहश्रिय मरालदर्शिनी-
मुत्सुकामुभयरागिणीं व्यधात् ॥ ७१ ॥

यामिनीघनघटेव हुङ्कृतिः
शौर्यजा स्तनितमम्बुदेरितम् ।
ह्लादिनीव करवाल-वल्लरिः
संप्लवं विदधिरे रणाङ्गणे ॥ ७२ ॥

अङ्कितुं मृगपतौ स्वविक्रमं
न क्षणं परमवाप यूथपः ।
कुम्भिकुम्भदलने महौजसा
रक्षितैव विदितात्म - पद्धतिः ॥ ७३ ॥

कालरात्रिरपि विस्मितेव सा
कालिमच्छद - घनावगुण्ठना ।
सम्पतन्निशितहेति - दीप्तिमद्
विह्वलेक्षणमचालयन् मुहुः ॥ ७४ ॥

प्राणिभीरपि विभीतवैभवो
विस्मयाग्रविधिना-ऽसिपाणिना ।
सोत्सुकाह्वय - समाहृतोऽप्यसा-
वन्तकोऽक्षमत नान्तिकस्थितिम् ॥ ७५ ॥

हेतिहृतिशातमार्गणा - ऽध्वना
चेतसा कविरिवाऽऽर्यविक्रमः ।
सोत्सहं प्रयतते स्म विग्रहे
शत्रुजीवितपदार्थ - लब्धये ॥ ७६ ॥

तत्क्षणं श्रमजलाकलोचनं
वीक्ष्य मालसूर - मुद्यतद्विपः ।
उत्सुकेन हृदये महासिना
लेखितो - ऽसुगमनक्षणागमः ॥ ७७ ॥

पूर्वमेव सवनानलः शमात्
सोऽन्त्यहव्यमिव शत्रुमाहरन् ।
आनयज्जगति शत्रुघातिनीं
श्रेयसामुपचिता - ऽनघायतिम् ॥ ७८ ॥

सूर्यमण्डल विभेदकीर्तये
गच्छताऽपि शिवराजबन्धुना ।
रक्षितो वृतपणो धराभृते
कोण्डना - विजयकेतुलक्षणः ॥ ७९ ॥

विस्मयान्तरित - शोकवारिधौ
यावदाविशति शत्रुवाहिनी ।
तावदेव समरोत्सुकः क्षणः
सूरजेन स हठं नवीकृतः ॥ ८० ॥

शौर्यरागबहलैः शिवस्तवै
रञ्जयन्निव मरुत्पथं ततः ।
आशुशुक्षणि - रुदर्चिरावभौ
मन्दुरोदर - तृणाशभासुरः ॥ ८१ ॥

तत्प्रतीपबल - मस्तयूथपं
नागयूथमिव केसरिक्रमे ।
कांदिशीक - मभजज्जहच्छ्रियं
कोशदुर्गसहितां शिवौजसे ॥ ८२ ॥

प्रातरिन्द्रदिशि रक्तिमच्छवौ
रक्तखड्गरुचिराः शिवानुगाः ।
गैरिकध्वज - धुताऽनिलाम्बरां
भानवे नवमुदं न्यवेदयन् ॥ ८३ ॥

शक्रसख्यमुपलब्धु - मक्षतं
स्वर्गतं सपदि मावले-पतौ ।
कीर्तिभारशिथिलां तदाकृतिं
वीक्ष्य भूरि विललाप भूपतिः ॥ ८४ ॥

सिंहतामपहरन् कथं विधे !
दुर्गमर्पयसि केवलं मम ।
स्वीकुरुष्व शतदुर्गमद्य मे
तं मदेकसुहृदं परं त्यज ॥ ८५ ॥

मुञ्च मुञ्च कृतकाक्षिमीलनं
सोऽहमस्मि वद किन्न वीक्षसे ।
मातरं विजययागवर्णितैः
किं विनोदयसि नाऽद्य विक्लवाम् ॥ ८६ ॥

त्वामवेक्ष्य परलोकवर्त्मनि
मामनाश्रय - मपूर्वबान्धव ।
साऽनवाप्तशरणाऽपि शोकधू-
र्हन्ति निर्दयमुपेक्षते कथम् ॥ ८७ ॥

इत्थमक्षय - पदौकसं नृपो
बालबन्धु - मनिमेष-तारकैः ।
लोचनैरिव निधातुमात्मनि
दूरवर्त्मपथिकं व्यलोकयत् ॥ ८८ ॥

सा स्नुषा श्वसुरमात्मजो गुरुं
बान्धवाः प्रियजनं शिवकृतौ ।
प्रापुरेव परमार्य - रक्षितु-
र्द्दृष्टिरेकसुहृदे मुधाऽतपत् ॥ ८९ ॥

मात्रे राजा प्रथितमहसे सोऽर्पयन् सिंहदुर्गं
जन्माऽवन्यै हृदयमिव तं सिंहमित्रञ्च दत्वा ।
आर्तो गत्वा प्रियसखिगृहं तज्जनाञ्चानुतोष्य
वत्सोद्वाहे जनकपरमोऽरञ्जयत्तत्कुटुम्बम् ॥ ९० ॥

॥ इति क्षत्रपति-महाकाव्ये षोडशः सर्गः ॥



## रस-स्वरूप-विमर्शः, भक्तिरसश्च—( १३२ पृष्ठस्य शेषांशः )

उद्बुद्धेषु भावेषु श्रोतारोऽपहायेमं लोकं शुद्धचैतन्यात्मके भावजगति वर्तमानाः कविवर्णितैर्भावैः सह साधारणीकरणाख्यम् ऐक्यमनुभवन्ति इत्युच्यते । विभावादीनां स्थूलोपकरणानान्तु तत्तद्भावजागरण एवोपयोगः । यथाग्नेः क्षोभणाय प्रादुर्भावाय आग्नेयपदार्थानामुपयोगः । प्रादुर्भूते च तस्मिन् केवलस्य वह्नेरनुभवः । लौकिक्यां स्थितौ प्रेमादीनां व्यक्तिविशेषसम्बन्धः स्फुरति । तावत्येव तत्परिमितिश्चायाति । अभिव्यक्ते भावे व्यक्तिविशेषसम्बन्धतिरोधानेन तदपरिच्छित्तिरेव अनुभूयते । तथा च कवेर्भावेन विभावादीनाञ्च भावेन ऐक्यमापन्नः सामाजिकभावो विगलितप्रमातृ-प्रमेयादिभेदसाधारण्यमुपयाति ।

भक्तिरसे तु भगवान् परमानन्दस्वभावः सर्वदा विद्यमान एव आलम्बनविभावः, तस्य नित्यत्वात् सर्वगतत्वाच्च । श्रवणादिना सगुण - साकाररूपेणापि रसिकानां हृत्सरोजे तत्प्रादुर्भावस्मरणात् । तदुक्तम्-

'त्वं भावयोगपरिभावितहृत्सरोजे
आस्से श्रुतोऽसि…ननु नाथ पुंसाम् ।
यद्यद्धियाऽत उरुगाय विभावयन्ति
तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥'

'प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहे ।' इति । अतो भगवद्रसानुभवः सुन्दर उक्तः ।

'कोऽतिप्रयासोऽसुरबालका हरे
रुपासने स्वे-हृदि छिद्र वत् सतः ।'

रसिकानां हृदये भगवद्गुणवर्णनश्रवणादिभिः भावराज्यस्याऽऽविर्भावो भवति । यत्र भावमयः सोपकरणो भगवान् व्यज्यते, यथायोग्यं विभावाद्यभेदबुद्धिरपि तत्र जायते । भावनाबलादेव विभावादीनां साधारण्यादिकम् ।

( क्रमशः )

# दधीचि-प्राण-संवादः

—श्री विष्णुदेव पण्डितः एम. ए., वेदान्तशास्त्री—

आसीत् मुनिर्दधीचिर्नामा। स तपस्तेपे। तेन तपसा आहारे संयमः कृतो विहारे च। आहारे विहारे च जीवनरक्षा। आहारे विहारे च प्राण-प्रतिष्ठा। आहारे विहारे च रोधिते कुतो जीवनं कुतो वा प्राण-प्रतिष्ठा? अन्नत्यागे मनो विकलं भवति। अन्नत्यागे प्राणा व्याकुलीभवन्ति। अन्नत्यागे तु मरणमेव असन्दिग्धम्। एष सामान्यः सर्वभूता-नाम् अनुभवः।

परं दधीचेर्विलक्षण एवानुभवः। तपसा तस्य शरीरं क्षीणमपि प्राणा न विकलतां गताः। शरीरे क्षीणे प्राणाः शरीरधातुषु प्रविष्टाः, अस्थि-मज्जासु प्रविष्टाः। न तु बहिर्गताः, नापि संक्षुब्धाः। मुनेस्तपश्चरणं विलक्षणं सञ्जातम्। तेन सन्तुष्टा प्राणदेवता तस्य नयनातिथिः बभूव। तां दृष्ट्वा स्तुत्वा च विनिवेदयत् मुनिः—

'अहो नु रे प्राणदेवताः! अन्नं त्यक्तम्। विहारो गतः। शरीरं क्षीणतां यातम्। कथन्नु मां न त्यजन्ति भवन्तः?'

'शोभनं रे तव चरितं मुने! साधो, सरलस्ते स्वभावः। ऋज्वी ते जीवनसरणिः। न भयम्, न च क्षोभः। कथं त्वां प्राणाः त्यक्ष्यन्ति? पश्य रे प्राणिनां जीवनम्। क्षणे क्षणे भयम्। प्रत्यहं शोकसंवेदनम्। ऋतुम् ऋतुं प्रति व्याधिवयोहानम्। आहारे विहारे च प्राणक्षोभः। 'प्राणा गमिष्यन्ति, मृत्युर्निकटवर्ती' इति प्रतिक्षणं शोचन्ति प्राणिनः। प्राणा अपि शरीरतो गमनं वाञ्छन्ति, परं ते शरीरं त्यक्तुं न वाञ्छन्ति।'

प्राणदेवस्य प्रेमाणं दृष्ट्वा मुनिः प्रसन्नतां गतः। तेन तपश्चरणे बलं समासादितम्। सन्तोषश्च प्रदर्शितः। स्तुता च प्राणदेवना। मनसि च जिज्ञासा सञ्जाता तस्य। प्रश्नश्च कृतवान् सः—

'कामं नु रे प्राणदेवता शरीरे संरक्षिता भव। को नाम प्राणान् त्यजेत्। प्राणास्तु सर्वेभ्यः प्रियाः। पृच्छामि रे किञ्चित् जिसास्यम्। को नाम देवः शरीरे वसिष्ठो वरिष्ठश्च? कस्य दैवस्य संस्थितिरत्र? कथन्नु धार्यते शरीरम्? यदि नाम प्रियस्ते, पूरय मम जिज्ञासाम्।'

'वरीयानेष ते प्रश्नो, मुनिवर! जिज्ञासां पूरयितुं श्रावयामि ते पुरातनीं गाथाम्—

'अत्र शरीरे निवसन्ति कतिचन देवाः। मनसि मनः, 'प्राणे प्राणः, वाचि वाक्, श्रोत्रे श्रोत्रम्। इन्द्रि-याणि च स्थानानि। इन्द्रियं साम्राज्यम्, इन्द्रियं च स्वाराज्यम्। तेषां सर्वेषां देवा इन्द्रस्वाधीनाः सानुकूलाश्च।

'एकदा विहरणं कर्तुं शरीरं विहाय कुत्रचिद् गतो देवराज इन्द्रः। इन्द्रे च गते देवाः स्वतन्त्राः स्वच्छन्दाश्च संवृत्ताः। आहरणं विहरणं च स्वच्छ-न्दतां गतम्। न कश्चित् रक्षयति शरीरम्, न कश्चित् विचारयति निकेतनम्,। न च कश्चित् पश्यसि परस्परानुभावम्।

'तथा यमेषु नियमेषु च गतेषु शिथिलतां प्राप्ताः शरीरस्था देवाः। ते च निर्बलतां गताः। परस्परं विवादं कृतवन्तः—को नु वरः, को नु बशी, को वरिष्ठः, को वा वसिष्ठः? इति।

'ते च सर्वे देवाः प्रजापतिं गत्वा पृष्ठवन्तः। स च प्रजापतिर्विचक्षणः सर्ववित्। तेन कथितम्—कथं नु रे विवदन्तो देवाः! प्रत्यक्षं कुर्वन्तु, यस्य गमनेन सह शरीरं विनश्यति, स वरः, स च वशी। स एव वरिष्ठो वसिष्ठश्च।

'तथाविधं करणीयमिति संभाव्य देवाः स्वे स्वे स्थाने समासीनाः। प्रथमं नेत्रस्य देवः सूर्यो निर्गतो वर्ष यावत्। पुनरागते तु शरीरं तिष्ठति। कथन्नु स्थितमिति पृष्ठे, यथा अन्धस्तथेति श्रुत्वा सूर्यः स्वस्थाने स्थितः। तदनु वाग्-देवता मुखतो निष्क्रान्ता। पुनरागतायां तु वर्षान्ते शरीरं तिष्ठति, तद् यथा मुनिर्वा मूको वा। तदनु श्रोत्रदेवतायां गतायां पुनरागतायां च वर्षान्ते शरीरं रक्षति बधिरवत्। तदनु मनसि गते पुनरागते च तिष्ठति शरीरं विना मनोभावम्, संकल्परहितं समाधि-स्थित-योगीव।

'अथ प्राणदेवातायाः क्रमः समागतः। सर्वा देवताः शरीरं त्यक्त्वा गता इति प्राणदेवताया अपि गमनं वरम्। तथेति प्राणदेवता गन्तुं समुद्यता। प्राणदेवता संक्षुब्धा इति देवा अपि संक्षुब्धाः, इन्द्रियाणि च संक्षुब्धानि, शरीरं च विकम्पितम्। प्राणा गच्छन्ति वा गन्तुमुद्यता वा इति विचार एव असह्यः संवृत्तः। सर्वाः देवताः सहसैव समागतास्तत्र—वाक् च मनश्च, श्रोत्रं च चक्षुश्च। ते प्रार्थयन्ते—अहो रे प्राणदेवते! नहि गन्तव्यं शरीरतः। वयं सर्वे शरीरे वराः, वरिष्ठश्च प्राणः। वयं सर्वे वशिनः शरीरे, वसिष्ठश्च प्राणः। त्वयि प्रतिष्ठितं मनः, त्वयि संस्थितं शरीरम्। त्वयि रे सर्वा इन्द्रियवृत्तयः।

'प्रिय रे मुने! श्राविता मया पुरा गाथा। प्रिया वै प्राणदेवता। त्वया तु तपश्चरणं कृत्वा त एव प्राणाः पुनः स्थापिताः शरीरे। नूतनं ते जीवनं सञ्जातम्। कायाकल्पस्त्वया कृतः। प्राणायाम-बलं त्वया रक्षितम्। त्वयि प्राणाः प्रतिष्ठिता इति सर्वाणि मनो-वाक्-चक्षुः-श्रोत्राणि पुनः प्रतिष्ठितानि। दीर्घं ते जीवनं भविष्यति। सुचिरं ते चरितं दृष्ट्वा सर्वे देवा मोदिष्यन्ति। भवतु ते प्रसादः!'

## प्रतह्लिका-प्रमोदः

विवर्धते तु सततं व्ययेनैव शनैः शनैः।
द्यामाप्नुवन्ति सततं प्राप्य यत्तत् हि किं स्मृतम्॥ १॥

सर्वेष्वथ तपःस्वेव किं तपः सुविशिष्यते।
त्यद् ब्रूहि येन तपसा तपस्वी वै नरो भवेत्॥ २॥

मान्यः सत्त्वेषु को रूढो जगत्यां सर्वतोऽधिकः।
तालाङ्कस्य यशोदा का बभूव वद सत्वरम्॥ ३॥

भीत्या रिपुः कस्य गदाप्रहारतः,
महाबलस्याथ पलायते रणात्।
सेनापतिघ्नश्च बभूव को युधि,
नरश्च दुर्योधन-भ्रातृ-नाशकः॥ ४॥

दिनस्य स्रष्टा भुवि कः प्रसिद्धो
वाप्यां च पद्मस्य विकासकः कः।
करैश्च तिग्मैरिह युक्तवान् को
रतश्च को वा तमसा विदारणे॥ ५॥

शत्रुञ्जयोऽस्त्रेण च केन चाऽर्जुनो
रामोऽपि लङ्काधिपतिं जिगाय वा।
सत्यं समाख्याहि किमस्त्रमुत्तमं,
नभःस्थितं चाप्यरिमाहते सदा॥ ६॥

—श्री प्रशस्यमित्र शास्त्री—

# नैनीतालः — अभिनवं खण्डकाव्यम्

**—श्री पट्टाभिरामशास्त्रिणः—**

[ साहित्यविभागाध्यक्षाः—वाराणसेय-संस्कृत-विश्वविद्यालयस्य ]

*[ कर्ममीमांसा-पारदृश्वानोऽपि साहित्य-सरसि जलकेलिकला-कुशलाः शास्त्रिपादाः ऐषमे ग्रीष्मावकाशे उत्तरप्रदेशस्य परमरम्ये पार्वते नैनीतालक्षेत्रे समागताः। तत्र परामुन्मुक्तां नृत्यन्तीं प्रकृतिनटीं वीक्ष्य बलादावर्जिता तेषां लेखनी विविधालङ्कारालङ्कृतं दर्शनदृष्टिपरिवेषितं खण्डकाव्यमिदं प्रासूत यच्च नूनं रससारसर्वस्वान् सहृदयान् आप्यायितान् विधास्यतीति अस्माकं द्रढीयान् विश्वासः। शास्त्रिपादानामस्या निरुपधिकृपायाः कृते 'सूर्योदयः' अतितरां कृतज्ञतामभिव्यनक्ति।*

—सम्पादकः ]

अत्युच्चशृङ्गैर्विविधैर्मनोहरैरनोकहैर्वारिधरैश्च संवृता।
आगन्तुकानां मनसो विधायिका सन्तुष्टिमेषा खलु कानन-स्थली ॥ १ ॥

अध्यात्मशक्तेः परिवर्धनाय देशा इमे प्राक्तन-कालसिद्धाः।
देवैन नित्यं कृतसन्निधाना मनोरथानां परिपूरकाश्च ॥ २ ॥

मध्ये गिरीणां तरुभिः समुच्छ्रितैः सम्भूषितानां जलदैः समावृतैः।
नीरेण शीतेन युतो मनोहरः प्रेम्णा तडागस्तु निरीक्ष्यते जनैः ॥ ३ ॥

पुराणसिद्धो ननु नैनितालो यत्रा-ऽत्रि - कुत्सादि - महर्षिसङ्घैः।
स्नातं पुरा 'मानस'-संज्ञिते-ऽस्मिन् सरोवरे पूतजले विशेषतः ॥ ४ ॥

सरोवरं तं परितो महान्तो महीधराः काननशोभिगर्भाः।
महर्षि - सञ्चार - विशेषपूता अभ्रंस्पृशो भान्ति विशालकायाः ॥ ५ ॥

नैनीताल - महीधरेषु जलदा आच्छादयन्तस्तरून्
खेलन्तः परितो गजा-ऽश्व - गवय - व्याघ्रादि-रूपाण्यहो।
धृत्वा मानव-मानसेषु नियतेः सृष्टौ रुचेर्न्यूनतां
कुर्वन्त्याशु च वारिणा वनभुवं संक्षाल्य संयान्ति हि ॥ ६ ॥

महर्षिसङ्घस्य तपःप्रभावात् सत्वेषु सत्वं मनुजेषु शान्तिः।
लतासु वृक्षेषु सुमादिसम्पच्चासन् विशेषेण वनप्रदेशे ॥ ७ ॥

गन्धर्वकन्या वनदेवताश्च स्वैरं विचेरुः परिहृष्टचित्ताः।
स्वर्गाच्च देवा अवतीर्य पूतान्यकारयन् साधु-वनस्थलानि ॥ ८ ॥

नैनीतालेऽतिरम्ये विलसति शुभदा वीक्षमाणा जलौघं
नानादेशादसह्यं दिनकर - करजं घर्मसन्ताप-वेगम्।
सापत्यान् प्रेयसीभिः प्रशिशमयिषया नैकरूपान् समेतान्
नानादेवी-कटाक्षैः करुण-रसभरैः शामयन्ती नितान्तम् ॥ ९ ॥

गुप्तेश्वरः पर्वतराजि-राजिमध्ये तथा मारुत-तुल्य - वेगः ।
पातालशृङ्गाग्र - विराजमाना - वाकर्षतः पान्थजनान् सहर्षम् ॥ १० ॥
गुप्तेश्वरं पर्वतराज एषः सदाभिषिञ्चञ्जलबिन्दुभिः खे ।
संवीजयन् मारुतिमेव लोकान् पूजाविधिं शिक्षयतीव नित्यम् ॥ ११ ॥
गुप्तेश्वरो जयति पर्वतराजराजि - पातालगह्वर-गुहागृह-सन्निविष्टः ।
शैलेन्द्रराजतनया वरधूप-दीपै-र्नानाभिधा-ऽर्चयति तं वरदं महान्तम् ॥ १२ ॥
सव्येन नीरनिवहस्य तटे निषण्णं सिन्दूरचिक्कण-विलेपनशोभिताङ्गम् ।
ध्यानेन निश्चलतया समवस्थितं तं पश्यन्ति भीमवपुषं पथिकाः कपीन्द्रम् ॥१३॥
हृत्पद्मकोशस्थित - जानकीपतिं विचिन्तयन् सन्ततमेव नित्यशः ।
शक्तिं तथा शक्तिमतेव योजने देवीं पुरीं ध्यायति लोकमातरम् ॥ १४ ॥
तटाक - तीरस्थित - मन्दिरे शुभे पद्मासनावस्थित - भीमविग्रहः ।
विराजते वालधिवेष्टितोदरो गदासहायः कपिसत्तमो महान् ॥ १५ ॥
वामेन मारुतसुतस्य गिरेरधस्तात् संवेष्टितं वनज - वृक्ष-लताप्रकर्षैः ।
पाताल-संज्ञक-महेश्वरमन्दिरं तद् विद्योतते परमया सुषमा-समृद्ध्या ॥ १६ ॥
रथ्यासु कान्ताः परितस्तडागं विचित्रवेषाः खलु कम्बुकण्ठ्यः ।
करान् प्रियाणां परिगृह्य यन्त्यो विभान्ति गन्धर्वकुलाभिजाताः ॥ १७ ॥
क्रीडाङ्गणे कन्दुक-खेलने रतान् नौका - समारोहण - तत्परान् बहून् ।
मार्गेषु सञ्चाररताननेकान् नानाभिधा पश्यति हृष्टमानसा ॥ १८ ॥
काश्चित् प्रिया उच्चकचा विभान्ति विभान्ति काश्चिद् गललम्बिकेशाः ।
काश्चित् प्रिया उन्नतचूचुकाग्रै - र्विध्यन्ति यूनां हृदयं प्रियाणाम् ॥ १९ ॥
नैनीताल - विशालनीर - निवहे नौका-विहार-क्षमे
नौकारोहण-साध्वसाः प्रियतमा दृष्ट्वा च तासां करान् ।
धृत्वा रोपयितुं स्थितेषु पतिषूरोजस्थितं छादनं
स्रंसद्वीक्ष्य निरीक्षकै - र्मुहुरहो सानन्दमुद्वीक्षिताः ॥ २० ॥
अतीत्य कामं वयसः क्रमं ताः सत्योऽपि काचेन तथा कचानाम् ।
बन्धेन लेपेन सितेन भान्ति श्यामा इवैता नवयौवनेन ॥ २१ ॥
शोणाधरत्वं खलु सुन्दरीणां काव्येषु गीतं कविभिः पुराणैः ।
ओष्ठद्वयं रञ्जितमत्र तासां विलोक्य चित्रं प्रतिभाति नूनम् ॥ २२ ॥

तुरङ्गमारोहण - कौतुकान्निजान् बालान् समारोप्य कुरङ्गदृष्टयः ।
कूले विहर्तुं रमणैश्च नीरधेः संयान्ति तेषां करपल्लवग्रहाः ॥ २३ ॥
विलोलकर्णाभरणाश्च दारिका वक्षोज - लोलायित - दीर्घवेणयः ।
करान्त - पादान्तविशेष - कञ्चुकाः कर्षन्ति यूनां हृदयानि भूरिशः ॥ २४ ॥
बाह्वन्त - कञ्चुकधरा अपराश्च नार्यो वक्षोजलम्बि-तनुदीर्घतरोत्तरीयाः ।
शीतेन वातहतकेन तदुत्तरीये नीतेऽपि निश्चलहृदः परितो भ्रमन्ति ॥ २५ ॥
अंसान्तकेशाश्च गलान्तकेशाः कन्या विकेशा बहुशश्चरन्ति ।
प्रकारभेदं कचबन्धनस्य समुद्वहन्त्यः किल भान्ति नार्यः ॥ २६ ॥
अंसान्तकञ्चुकधरा निटिलायताक्ष्यो दार्वासनानि पतिभिः सह भूषयन्त्यः ।
अंसस्थलेषु विनिवेश्य मुखानि भर्तुः शातं हि दुर्लभतरं समवाप्नुवन्ति ॥ २७ ॥
लौहानि चक्राणि दृढानि पादयोः प्रबध्य वै चिक्कण - दारुनिर्मिते ।
देशे युवानो युवतीभिराश्रिता नृत्यन्ति कूर्दन्ति विशेषकेलिभिः ॥ २८ ॥
अत्युच्चशृङ्गाणि समारुरुक्षवः कान्ताः पुरो यान्ति शनैः समुत्सुकाः ।
तां चानुयान्तीषु रमासु काचित् पृष्ठातिभाराद् गतिमान्द्यमाप्नुयात् ॥ २९ ॥
उच्छ्वास-निःश्वासचलत्पयोधराः प्रस्विन्नगात्राः समवेक्ष्य वल्लभाः ।
आश्लिष्य दोर्भ्यां वदनेषु सङ्गतान् प्रोञ्छन्ति तासां श्रमजातविप्रुषः ॥ ३० ॥
अभ्रंलिहं पर्वतराजशृङ्गं कृच्छ्रेण कान्तैः परिगृह्य नीताः ।
शिलामयीं वेदिमधिश्रयन्त्यो रम्यां प्रपश्यन्त्यचलस्य शोभाम् ॥ ३१ ॥
अधश्च दृष्टिं प्रविसारयन्त्यो भीताः प्रकामं भ्रमितोत्तमाङ्गाः ।
पार्श्वे स्थितान् कान्तजनान् दृढेन समाश्लिषन् बिम्बफलाधरोष्ठ्यः ॥ ३२ ॥
इत्थं समीक्ष्य जनतादृत - भोगलीलां सम्प्रेषितो भगवतेव जितेन्द्रियः सः ।
वातात्मजो हि विविधं परिगृह्य रूपं तिष्ठत्यजस्रमिह लोकनियन्त्रणाय ॥ ३३ ॥
सांसारिकेषु विषयेषु सदा निविष्टं चेतो निवारयत हे प्रविनश्वरास्ते ।
सम्बोधयन्निति हि मारुतिरेष तीरे मौनेन लोकमुपदेष्टुमिवोपविष्टः ॥ ३४ ॥



# गोवध-निरोधो मांस-भक्षणञ्च

—श्री श्रीकृष्णशर्मा—

साम्प्रतिकानां कतिपयानां तथाकथित-शिष्टानामयं सहजः स्वभाव इव लक्ष्यते यद् गोवधनिरोधप्रस्तावसमकालमेव अविवेकतस्तदाक्षेपो नाम । परं नोचितमेतत् । प्रश्नोऽयं गोवधस्य । गोवधोऽन्यो विषयो मांसभक्षणं चान्यत् । अद्यापि कतिपये स्वयं मृतायाः गवो मांसं भक्षयन्ति । किमेतावता स गोवध उच्येत ? गोदुग्धमपि मांसमिव सात्त्विकोऽन्यतमो गोविकारो यं च सर्वे पिबन्त्येव । किमेतावता स गोवधो जातः ? किं मातुः स्तन्यपायी बालो मातुर्वधं समाचरति ?

## विषयसाङ्कर्यं सर्वथाऽनुचितम्

गोवधनिरोधस्य नायमाशयो यत् जीविताऽवस्थायां गोवंशतः संभाव्या उपकारा न समादेयाः, अन्तं यावत् गोमयादिकं मरणोत्तरञ्च मांसचर्मादिकं 'खाद्या'दिपदार्थनिर्मितौ नोपादेयमिति वा । प्रश्नस्तु एतावानेव यत्तस्या वधो न करणीयः, जीवितादृष्टक्षयेनैव सा म्रियेतेति । गोवधकारी दण्ड्यो भवेत् । सात्त्विक-दिव्यजीवनस्यायं साधनमार्गो यश्च 'बाह्यानां सिद्धिकारणम्' अर्थात् राष्ट्रस्य आध्यात्मिकताया नैतिकतायाश्च संवर्धनमास्ते । राष्ट्रहितविरोधी व्यक्तिस्वातन्त्र्यं कथमपि समर्थनीयं न भवेत् ।

युगान्तरीय-समुल्लेख - विषयकाणि विभिन्नानि मतान्यादाय गोवधनिरोधस्य विरोधः प्रकृतविषयतः सर्वथा असङ्गतः । साम्प्रतमिव अवैधं गोवधं कृत्वा तन्मांसभक्षणं भारते कदापि सम्मतं नासीत् । एतादृश-गोवधकर्ता सदैव दण्ड्यः प्रायश्चित्ती चैव मतः पुराकाले । विषयेऽत्र न कस्यापि मतभेदः । साम्प्रतिकोऽपि सर्वविधो गोवधः सर्वथा अवैध एव । अतस्तस्य सर्वथा निरोधः परमावश्यकः, एतावानेव प्राकृतिको विषयः ।

विषयेऽत्र महाभागवतैः श्री चैतन्यमहाप्रभुभिः परम्परासिद्धो निर्णय एवमुक्तः—

प्रभु कहे वेदे कहे गोवध-निषेधे ।<br>
अतएव हिन्दूमात्र न करें गोवध ॥<br>
जियाइते पारे यदि तव मारे प्राणी ।<br>
वेद-पुरान एछे आछे आज्ञावाणी ॥<br>
अतएव जरद्गव मारे मुनिगण ।<br>
वेदमन्त्रे शीघ्र करे ताहारा जीवन ॥<br>
जरगद्गव हञायुवा हय आर बार ।<br>
ताते तार वध नहे हय उपकार ॥<br>
कलिकाले तैछे शक्ति नाहिक ब्रह्मणे ।<br>
अतएव गोवध केहोना करे एखने ॥<br>
( चैतन्यचरितामृते )

अर्थात् भगवता वेदेन गोवधो निषिद्धत्वेन उक्तः । अतो हिन्दुमात्रेण गोवधो न करणीयः । वेदे पुराणेषु च यत्र कुत्रचन गोवधस्य अनुज्ञा प्रदत्ता,[1] सापि हतस्य पशोः पुनर्जीविताधानसामर्थ्ये

१. अस्यायमाशयः—त्रेतादियुगेषु अस्थिगताः प्राणा आसन् । शोणित - मांसादीनामुपचयेन स्वकार्यसम्पादनाय असमर्थाः गवादय आगत्य ऋषीणां पुरतः स्वीयं भारमपनेतुं प्रार्थयन्ते स्म । दयालवश्च ऋषयः शस्त्रैस्तासां शोणित-मांसादिभरं दूरीकृत्य तेषु उपकारमेव कुर्वन्ति स्म । तासां प्राणविशसनाभावेन प्राणहिंसनरूपो वधो न जायते स्म । कलौ पुनः 'अन्नगताः प्राणाः' इति कृत्वा तादृक्प्रयोगोऽसम्भवी ।

सत्येव। अत एव मुनिगणा जरद्गवं हत्वा पुनर्वेद-मन्त्रैस्तान् जीवितानपि कुर्वन्ति स्म। अत एव पूर्वं जरद्गवस्य हननं जायते स्म। नहि तेन तद्वधः, अपितु उपकार एव मन्यते स्म। किन्तु साम्प्रतिके कलौ युगे ब्राह्मणेषु तादृशी शक्तिर्न विद्यते। अतः साम्प्रतं केनापि गोवधो न करणीय इति।

'ताते तार वध नहे' इदं सर्वप्रश्नस्य प्राचीनं समाधानम्। इत्थं युगान्तरीणं समुल्लिखित-सामर्थ्यं ब्राह्मणेषु न स्वीक्रियेत चेद् युगान्तरीयो गोवधोऽपि मन्तुं न शक्यः। कथमनुमन्येत इय-मर्धजरतीः। अतो युगान्तरोल्लेखः सर्वथा प्रकृतानु-पयोगी।

प्राचीनभारते समनुष्ठितानां विभिन्नप्रयोगाणां वैज्ञानिकदृष्ट्या परीक्षणमन्तरा तद्रहस्यं कथमपि बुद्धौ समारोढुं न शक्नुयात्। प्राचीनास्ते प्रयोगाः तादृशप्रयोगैर्जायमानानां सर्वविधानिष्टानाम् (हिंसा-दोष-पारलौकिकाऽऽध्यात्मिकादिदुष्परिणामानाम्) वर्जनलक्ष्यं पुरस्कृत्यैव कृताः, राष्ट्रोन्नयने तेषा-माकूल्यमाधातुं तत्प्रयोगकाले प्राच्यैरवहितम्। दीर्घकालं यावत् स्वीयविविधसामर्थ्यैः प्रमाणानु-गृहीताः परिष्कृतास्तत्कालं साफल्याधायकाश्च ते प्रयोगा आसन्। तथापि अन्ततस्तैर्निर्ध्यातं यद् गोवधदुष्परिणामैः राष्ट्रं संरक्षितुं कोऽपि सार्वदि-गुपायो न सिद्धचति। अत एव युगत्रयान्ते तैः एकमात्र-गोवधनिरोध एव राष्ट्रहिताय निर्धारितः। अस्यैव क्षेत्रं नाम 'कलिवर्ज्यम्'। संस्कृतवाङ्मयगतानाम् अशेषाणां गोवधसमुल्लेखानाम् अयमेव चरमो निष्कर्षः।

विज्ञान-चिकित्सा-राजनीत्यादिक्षेत्रेष्वपि आधु-निकैः अनेका प्रयोगाः क्रियन्ते। किन्तु यदा ते कथमपि हितकराः साफल्याधायकाश्च न सिद्धचन्ति, तदा तैस्ते निर्ममं त्यज्यन्ते एव। इयमपि समस्या तादृशी एव। एवञ्च संस्कृतवाङ्मये तादृशाः किय-न्तोऽपि प्रयोगाः कामं समुल्लिखिता स्युः, ते सर्वे प्रयोगा एवासन्। चरमनिष्कर्ष-स्थिरीकरणपूर्व-कालीनास्ते तत्कालीन - सामर्थ्यविशेषानुप्राणिता आसन्। सम्प्रति ते त्याज्या अनुष्ठानानुपयोगिन एवेति प्रयोगाणां तेषां चरमो निष्कर्षः।

पुराणेतिहासेषु प्रसिद्धं यद् दीर्घकालं यावत् प्रयोगानुष्ठानैर्निर्णीय दैत्यगुरोः शुक्राचार्यस्य काले अन्यूनं बुद्धिव्यवसायिनां कृते मद्यनिषेधोऽनिवार्यतया स्थिरीकृतोऽभवत्। अत एवाद्य भारते अन्यदेशा-पेक्षया परम्परासिद्धो मद्यनिषेधः प्रचलति।' अत्र यदि मद्यनिषेध-विरोधिनो मद्यनिषेध-स्थिरीकरण-पूर्वकालीनान् प्रयोगान् प्रदर्श्य मद्यपानस्य समर्थनं कुर्युश्चेत् किं तत्स्वीकरणीयं भवेत्? प्रकृतेऽपि तथैव स्थितिः। अन्तरमेतावन्मात्रमेव यत् मद्य-निषेधो वैयक्तिको विषयः, अयं पुना राष्ट्रस्य जीवन-मरण-प्रश्नः।

एतेनापि स्थिरीकरण-पूर्वकालीनाः प्रयोगाः गोवधनिषेधनिर्णये शासकान् न प्रतिबध्नन्ति। यतो हि—वेदशास्त्र - पुराणेतिहास - सूत्रोक्ताः समाजे रूढाश्च नैकाः प्रवृत्तयः शासनेन नियमान् विधाय निषेधिताः सन्ति। सत्येवम् एतादृश-प्राचीनप्रयोगचर्चानुयुक्त्या विचारयितुमक्षमाणां बलात् प्रतिपक्षिणो मुखमुद्रणमिव भवेत्।

एतेनापि गोवधनिरोधो राष्ट्रस्य कृतेऽनिवार्यः। यतो हि—गौः, सतीः, सत्यवादी, अलुब्धः (भ्रष्टा-चारविहीनः), दानशीलः, वेदः, विप्रश्चेति सप्त राष्ट्रस्य सात्त्विकदिव्यजीवनसमुन्नायकाः। अत एव आध्यात्मिक - नैतिकदृष्ट्या राष्ट्रस्य सुस्थितौ

प्रयोजकाः शिष्टैः समाम्नाताः । एभिरेव महीधृतिः आचार्यैरुक्ता—

**गोभिर्वेदैश्च विप्रैश्च सतीभिः सत्यवादिभिः ।**
**अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥**

एतेष्वपि गवः सर्वप्राथम्यम् । आध्यात्मिक-नैतिकदृष्टया राष्ट्रस्य सुस्थितिः समुन्नतिश्च प्राथम्येन गोवंशाधीना । अत एव गोवधकर्तृषु देशेषु आध्यात्मिक - नैतिकदृष्टया भारतदेशवत् समुन्नतिर्नभवदिति सुस्पष्टतरम् । अत एवोक्तम्—

**नाविदितो दुश्चरितात् नाशान्तो नासमाहितः ।**
**नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात् ॥**

एतादृश दुश्चरितेभ्यो निवृत्तिमन्तरा सात्त्विक-समुन्नतिः अशक्यतरेति । उपर्युक्तसप्ततत्त्वेषु इतरेषां तु सम्प्रति काचिद् विकृतावस्था दरीदृश्यते । किन्तु गोवंशस्तु अद्यापि स्वीयपूर्वरूपेणैव राष्ट्रहितं समाचरन् प्रतिष्ठित इत्यपि तद्वधनिरोधस्य प्रबलतरमुपोद्बलकं जागर्ति ।

भारतीयाध्यात्मिकतयाः प्रतिष्ठेयं श्री स्वामि-विवेकानन्दादिभिः महात्मभिः बहुशः प्रख्यापिता । भारतस्य जगति प्रतिष्ठा प्रधानतया आध्यात्मिकताकृतैव । अत एव भारतीयाः सर्वे साम्प्रदायिका आध्यात्मिकताया गौरवं वहन्ति । सर्वेषु सम्प्रदायेष्वस्यां प्रेम्णोऽभिवृद्धिः इत एवावश्यकी । गोवध-निरोधविषयोऽत्र अतितरां समुपयुक्तः । कस्मिन्नपि सम्प्रदाये गोवधो नानिवार्यः । अतः सर्वसम्प्रदायेषु भारतीयाध्यात्मिकताया सात्त्विकदिव्यजीवनस्य समुन्नायको गोवधनिरोधविषयोऽयं सर्वथा राष्ट्रैक्य-धायको राष्ट्रहितकरश्च सिध्यति ।

## आध्यात्मिकता विश्वोपयोगिनी

आध्यात्मिकतयाः प्रतिष्ठा न केवलं भारतदेशस्य कृते, अपि तु विश्वस्यापि स्थितये परमावश्यकी। सम्प्रति जडविज्ञान - समुद्भाविताभ्यो विपद्भ्यस्त्राणाय सर्वतो दृष्टिः आध्यात्मिकतायामेव विवशतः केन्द्रिता जायते सर्वेषां विवेकिनाम् । अद्यननीयो जाज्वलमानः प्रश्नोऽयं यद् विज्ञानमिदं कथङ्कारम् आध्यात्मिकतया नैतिकतया च नियन्त्रणीयमिति । सस्पृहं विश्वं भारतदेशत एवैतद् आशास्ते ।

भारतीयैर्महद्वैज्ञानिकैः डा० जगदीशचन्द्र बोस महाभागैर्यदा वैज्ञानिकैः प्रमाणैः वृक्षेषु जीवगतिसाधिता, तदा श्रूयते डॉ० एनी बेसेन्ट महोदयाभिरुक्तमासीत् यत् 'कामं विश्वस्मिन् महत्तरा गवेषका वैज्ञानिकाः स्युः । केवलमयं भारतीय वैज्ञानिक आध्यात्मिकता-नियन्त्रितस्य विज्ञानस्य अनुसन्धाने सफलोऽभवत्, नान्यः कश्चन । यतो हि अयं भारतीयाध्यात्मिक-संस्कारिणो हिन्दूकुटुम्बस्य सदस्य आसीत्' इति ।

अतोऽद्य परमावश्यकं यदखिलं विश्वमेव आध्यात्मिक-दिव्यजीवनस्य सुसंस्कारान् आत्मनि निदध्यात् । अन्यूनं भारतीयानां सर्वेषां साम्प्रदायिकानां तु इदमत्यावश्यकं कार्यं यदाध्यात्मिक-सांस्कृतिक - संस्कारन् स्वात्मनि संवर्ध्य विज्ञानम् आध्यात्मिकतया नियमितं विधाय विश्वस्य सुस्थितौ सहयोगं दद्युः ।

इत्थं सर्वभारतीयेभ्य अनुपेक्ष्याया आध्यात्मिकताया अभिवृद्धये गोवधनिरोधः किल निरापदः प्रशस्तश्चोपक्रमः । विदेशेषु भिन्नसाम्प्रदायिकानामपि भारतीयाध्यात्मिकताविषये जिज्ञासा वर्धमाना दरीदृश्यते । अस्माकं देशेऽपि मध्यकाले कबीर-रहीम-रसखानादिमहात्मभिः अकब्बरादि-सम्राड्भिरपि विषयेऽत्र आत्मनः प्रियता प्रख्यापिता, या किलास्माकं सर्वेषां कृते अतितरां मार्गदर्शिका । तत्रापि रसखान-महाभागेन तु गोर्नाम-

## नामापि न ज्ञायते

आबाल्याद् गुरुसन्निधानवशतः प्रोन्मीलितप्रातिभा-
ऽऽलोका लोकसमादृताः सदसतोर्भेदावगाहक्षमाः ।
विद्वांसोऽपि कलौ खलीकृतधियो मज्जन्त्यसज्जल्पने
तेनैवाद्य विवेकवासितहृदां नामापि न ज्ञायते ॥१॥

कालिन्दीकमनीयकूलविलसत् - कादम्बवाटीनटद्
गोपीलोचनकैरवामृतकरे कारुण्यधाराधरे ।
लग्नं यस्य मनो मनाङ्‌मतिमतो धन्यस्य तस्यान्तिके
कालस्यास्य कलेः कलेवरपुषो नामापि न ज्ञायते ॥२॥

श्रीमद्भारतभूमि-दास्यदलने सन्धानुबन्धाच्चिरं
बन्धात्तां विरहय्य कीर्तिविशदास्तुङ्गं पदं लेभिरे ।
ये तुच्छीकृतकीर्तयो निजतनुच्छेदेऽपि मौनं श्रिता-
स्तेषां हन्त ! महात्मनां जनमुखे नामापि न ज्ञायते ॥३॥

वामा यत्र चरन्ति पूरितपुराऽऽरामा निशासङ्गमे
सामाद्या न गिरः स्फुरन्ति परितः कामार्थमात्रोद्यमे ।
दामान्यत्र नवे युगे न च पुनर्धामानि धर्मात्मनां
'मामा'-वादवशाद् विशुद्धमनसां नामापि न ज्ञायते ॥४॥

—श्री बटुकनाथशास्त्री खिस्ते—

[ प्राध्यापकः—वाराणसेय-संस्कृत-विश्वविद्यालयस्य ]

ग्राहं स्वात्मन अध्यात्मप्रियता परं समभिव्यञ्जिता । यथा—

**जौ पसु हौं तो कहां बस मेरो,**
**चरौं नित नन्द कि धेनु मझारन ।**

अर्थात् 'यद्यहं पशुयोनौ जन्म गृह्णीयाम्, तदा नित्यं व्रजराजस्य नन्दगोपस्य व्रजेषु चरेयम्' इति ।

वयमितिवृत्तेषु पठामो यत् सम्राजः अकब्बरस्य अशोकस्य च साम्राज्ये सर्वथा गोवधनिरोधः कृत आसीत् । नैकैश्चक्रवर्तिभिः हिन्दूमहाराजैः, गीतायाः अध्यात्मगुरुभिः भगवद्भिः श्रीकृष्णैश्च आध्यात्मिकता-प्रेम्णा स्वात्मैव गोसेवकत्वेन कल्पितः । अतो विषयोऽयं सर्वेषां सज्जनानां निर्विशेषमैकमत्येन अभ्यर्हित इति पृथक् वक्तुं नावशिष्यते । प्रतिवेशि - नयपालराष्ट्रे पुनरद्यापि गोवधनिरोधो विराजते ।

अतः इत्थं गोवर्धनिरोधद्वारा सर्वसम्प्रदायेषु अध्यात्मप्रियतासंवर्धनमुखेन विज्ञानमध्यात्मनियन्त्रितं विधाय तत् शङ्करं कर्तुं सर्वैरग्रेसर्तव्यम् । जनतायाः कर्तव्यमेतद् यदत्र विषये समुचितकार्यसम्पादनाय शासनाय सहयोगो देय इति ।

अनेन राष्ट्रस्य आर्थिकक्षतेः या आपत्तिराक्षिप्यते, तदर्थमपि उपाय - योजना नाशक्या । श्री सतीशचन्द्रदास गुप्तेन 'दि काउ इन इण्डिया' नामके भागद्वयात्मके ग्रन्थे सर्वस्मिन्नस्मिन् विषये सविस्तरं विचारितं यत्र च महात्मगान्धिनाम् 'आमुख'-मप्यास्ते । एवंस्थितौ कतिपयापातरमणीयानि कारणानि प्रस्तुत्य गोवधनिरोधन औदासीन्यं न कदापि न्यायसङ्गतम् । गोवधनिरोधादन्यः को नाम विषयो यो भारतीयाध्यात्मिकतायाः साधको भवेत् ? अत्र भारतभूमौ जातेषु अत्रैव संवर्धितेषु मनुजेषु ऐकात्म्यभावं जनयेत् । भारतीयैकात्म्यभावाभिवर्धनाय अहरहः प्रयतमानेन भारतीयशासनेनैव विषयेऽत्र अग्रक्रमो निक्षेप्तव्य इत्येव तस्य कृते शोभनं भवेत् ।

—:०:—

## श्री भारतधर्म-महामण्डल-शास्त्रप्रकाश-विभागद्वारा प्रकाशितानि पुस्तकानि

| पुस्तक | मूल्य |
|---|---|
| १. धर्म-कल्पद्रुम प्रथम खण्ड | २.०० |
| २. ,, द्वितीय खण्ड | १.५० |
| ३. ,, तृतीय खण्ड | २.०० |
| ४. ,, चतुर्थ खण्ड | २.०० |
| ५. ,, पंचम खण्ड | २.०० |
| ६. ,, षष्ठ खण्ड | ३.५० |
| ७. ,, सप्तम खण्ड | २.०० |
| ८. ,, अष्टम खण्ड | ३.५० |
| ९. धर्म-कल्पद्रुम द्वितीयखण्डसहित राजकीय संस्करण | ५.०० |
| १०. प्रवीण दृष्टि में नवीन भारत १-२ खण्ड | २.०० |
| ११. नवीन दृष्टि में प्रवीण भारत | १.०० |
| १२. साधन-चन्द्रिका | १.७५ |
| १३. शास्त्र-चन्द्रिका | १.५० |
| १४. धर्म-चन्द्रिका | १.२५ |
| १५. आर्य-गौरव | ०.५० |
| १६. नीति-चन्द्रिका | ०.५० |
| १७. धर्म-प्रश्नोत्तरी | ०.२५ |
| १८. चतुर्दश-लोकरहस्य | ०.२५ |
| १९. गीतार्थ-चन्द्रिका सजिल्द | ३.०० |
| २०. ,, ,, अजिल्द | २.५० |
| २१. सनातनधर्म-दीपिका | ०.७५ |
| २२. धर्म-विज्ञान प्रथम खण्ड | ५.०० |
| २३. ,, द्वितीय खण्ड | ४.०० |
| २४. ,, तृतीय खण्ड | ४.०० |
| २५. सतीचरित्र-चन्द्रिका | २.०० |
| २६. नित्यकर्म-चन्द्रिका | ०.२५ |
| २७. धर्म-सोपान | ०.२५ |
| २८. धर्मकर्म-दीपिका | ०.२५ |
| २९. सदाचार-सोपान | ०.०६ |
| ३०. कन्याशिक्षा-सोपान | ०.०६ |
| ३१. ब्रह्मचर्य-सोपान | ०.२५ |
| ३२. साधन-सोपान | ०.५० |
| ३३. शास्त्र-सोपान | ०.२५ |
| ३४. उपदेश-पारिजात | ०.५० |
| ३५. कल्कि-पुराण | १.५० |
| ३६. पातञ्जल-योगदर्शन | ३.०० |
| ३७. महामण्डल-रहस्य | १.५० |
| ३८. मन्त्रयोग-संहिता | १.०० |
| ३९. हठयोग-संहिता | ०.५० |
| ४०. तत्त्वबोध | ०.१३ |
| ४१. स्तोत्र-कुसुमाञ्जलि | ०.२५ |
| ४२. भगवद्गीता प्रथम खण्ड | १.०० |
| ४३. विष्णु-गीता | १.०० |
| ४४. सूर्य-गीता | ०.५० |
| ४५. शक्ति-गीता | १.०० |
| ४६. धीश गीता | ०.७५ |
| ४७. शंभु-गीता | १.०० |
| ४८. संन्यास-गीता | १.०० |
| ४९. गुरुगीता | ०.२५ |
| ५०. कर्ममीमांसा-दर्शन प्रथम खण्ड | १.५० |
| ५१. ,, द्वितीय खण्ड | २.०० |
| ५२. ,, तृतीय खण्ड | ५.०० |
| ५३. कर्ममीमांसा-दर्शनम् ( संस्कृत ) | २.०० |
| ५४. राम-गीता | २.५० |
| ५५. कहावत-रत्नाकर साधारण रायल | १.०० |
| ५६. रामायण तुलसीकृत | १.५० |
| ५७. दैवीमीमांसा-दर्शन प्रथम भाग | ३.५० |
| ५८. ,, द्वितीय भाग | ५.०० |
| ५९. त्रिवेदी सन्ध्या | ०.३७ |
| ६०. गोव्रत-तीर्थमहिमा | ०.५० |
| ६१. मार्कण्डेय-पुराण प्रथम खण्ड | १.०० |
| ६२. ,, द्वितीय खण्ड | १.०० |
| ६३. ,, तृतीय खण्ड | १.०० |
| ६४. ऋजु-पाणिनीयम् | ०.७५ |
| ६५. संगीत-सुधाकर | २.५० |
| ६. पुराण-रहस्य | १.५०६ |
| ६६७. संन्यासधर्म-पद्धति | १.५० |
| ८. पातञ्जलीय-गदर्शनम् सं )स्कृत ) | ४.०० |

पञ्जीकृतसंख्या एल० १८१७

# सूर्योदयस्य नियमाः

**पत्र-संहिता**

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका ( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

**विज्ञापन-शुल्कम्**

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६० ) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी।**

सम्पादकः प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।